# श्रीविद्याकामाक्षीदेवी-
# नवावरणपूजापद्धतिः



Published by:
**Omkarananda Ashram Himalayas**
Muni-ki-reti, Uttaranchal, INDIA

ॐ

# श्रीविद्याकामाक्षीदेवी-नवावरणपूजापद्धतिः

# Śrīvidyā-Kāmākṣī-Devī-Navāvaraṇa-Pūjā-Paddhatiḥ

Published by:
**Omkarananda Ashram Himalayas**
Swami Omkarananda Saraswati Charitable Trust
Swami Omkarananda Saraswati Marg
Muni-ki-reti, P.O. Shivanandanagar-249192
Dist. Tehri Garhwal, Uttaranchal, INDIA

Edited by:
Srividyopasana Sthanikam
**C.V. Kamakoti Sastry**
Hereditary Mirasdar
Sri Kanchee Kamakoti Peetam
Sri Kamakshi Ambal Devasthanam
Kancheepuram - 631502, Tamil Nadu

Printed at:
Semwal Printing Press
Rishikesh-249201

ॐ श्रीललितामहात्रिपुरसुन्दर्यै नमः ॐ

---

ओङ्कारानन्दाश्रमहिमालयस्थस्य
ओङ्कारानन्दकामाक्षीदेवीमन्दिरस्य
श्रीमहाकुम्भाभिषेकप्रसङ्गे
श्रीविद्योपासकानामुपकाराय
प्रकाशितम्

चैत्र० शुक्ल० एकादशी–चतुर्दशी वि०सं० २०६१

Published on the occasion of
**Mahakumbhabhishekam of**

# Omkarananda Kamakshi-Devi Mandir

at Omkarananda Ashram Ḥimalayas

1st to 4th April 2004

**for Shrividya Upasakas**

First Edition: April 2004

Price: Rs. 150.-

## *The Divine Mother I Adore*

*If my heart is all-compassionate, you can be sure that the God I adore, the Truth I adore, the Divine Mother I adore, is Infinite Compassion, Love, Sweetness.*

*If my inner heart and mind and life are beautiful, then you can be sure the Divine Mother I adore is Infinite Beauty.*

*If my life is full of abundance in every positive quality, and people find strength, happiness, prosperity by association with me, you can be sure that the Divine Mother I adore is Infinite Welfare, Infinite Prosperity, Infinite Wealth and Sustenance.*

*My inner being has said a thousand times that it has filled the whole cosmos with the vibration and light of the Divine.*

*Every object is disclosing to me the image of Endless Light and Beauty and Joy, because my whole life has smiled in God-consciousness.*

Swami Omkarananda



Srividyopasana Sthanikam **C.V. Kamakoti Sastry**
Hereditary Mirasdar, Sri Kanchee Kamakoti Peetham
Sri Kamakshi Ambal Devasthanam, Kancheepuram, T.N.



1. His Holiness Jagadguru
**Shri Chandrashekharendra Saraswati Swamigal**

2. His Holiness Jagadguru
**Shri Jayendra Saraswati Swamigal**

3. His Holiness Jagadguru
**Shri Shankaranandendra Saraswati Swamigal**





# ॥ श्रीचक्रम् ॥



बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥

# ॥ विषयसूची ॥

ॐ श्रीगुरुभ्यो नमः।

ॐ श्रीमहागणपतये नमः।

ॐ श्रीललितामहात्रिपुरसुन्दर्यै नमः।

# श्रीविद्याकामाक्षीदेवी-नवावरणपूजापद्धतिः

## ॥ प्रथमः खण्डः ॥

यागमन्दिरप्रवेशादि चक्रपूजान्तम्।

ब्रह्मविद्यासंप्रदायगुरुस्तोत्रम्।

आब्रह्मलोकादाशेषादालोकालोकपर्वतात्।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम्॥ १॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशर्षिभ्यो महद्भ्यो नमो गुरुभ्यः। सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि सोहमस्मि ब्रह्माहमस्मि॥ २॥

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान्द्व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्॥ ३॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ ४ ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥ ५ ॥

नारायणं पद्मभवं वसिष्ठं
शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं
गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥ ६ ॥

श्रीशंकराचार्यमथास्य पद्म-
पादं च हस्तामलकं च शिष्यम् ।
तं त्रोटकं वार्तिककारमन्या-
नस्मद्गुरून् संततमानतोऽस्मि ॥ ७ ॥



## यागमन्दिरप्रवेशः ।

ओं ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः । (द्वारस्य दक्षशाखायाम्)
४ भं भैरवाय नमः । (द्वारस्य वामशाखायाम्)
४ लं लम्बोदराय नमः । (द्वारस्य ऊर्ध्वशाखायाम्)

इति द्वारदेवताः संपूज्य ।

## तत्त्वाचमनम् ।

ओं ऐं ह्रीं श्रीं ऐं कएईलह्रीं आत्मतत्त्वं शोधयामि स्वाहा ।
४ क्लीं हसकहलह्रीं विद्यातत्त्वं शोधयामि स्वाहा ।
४ सौः सकलह्रीं शिवतत्त्वं शोधयामि स्वाहा ।
४ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं
सर्वतत्त्वं शोधयामि स्वाहा ॥

## गुरुपादुकामन्त्रः ।

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसः शिवः सोहं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सोहं हंसः शिवः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः अमुकानन्दनाथ-श्रीपादुकां पूजयामि नमः ॥

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसः शिवः सोहं हंसः ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

इति मृगीमुद्रया गुरुपादुकामुच्चार्य, सुमुख-सुवृत्त-चतुरश्र-मुद्गर-योन्याख्याभिः पञ्चभिर्मुद्राभिः श्रीगुरून् वामभुजे प्रणम्य, गणपतिमूलेन स्वदक्षभुजे योनिमुद्रया महागणपतिं प्रणमेत् ॥

घण्टापूजा ।

हे घण्टे सुस्वरे पीठे घण्टाध्वनिविभूषिते ।
वादयन्ति परानन्दे घण्टादेवं प्रपूजयेत् ॥ १ ॥

आगमार्थं च देवानां गमनार्थं तु रक्षसाम् ।
कुर्यात् घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥ २ ॥

इति घण्टानादं कृत्वा ॥

सङ्कल्पः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

मूलेन प्राणानायम्य । देशकालौ संकीर्त्य –

मम श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थं यथासंभवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये । तेन परमेश्वरं प्रीणयामि ॥

आत्मानमलंकृत्य ताम्बूलेन सुरभिलवदनः सन् प्रमुदितचित्तः शिवोऽहम् इति भावयेत्॥

आसनपूजा।

आसनमास्तीर्य दक्षिणहस्ते जलमादाय सौः इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण आसनं प्रोक्षयेत्॥

अस्य श्री आसनमहामन्त्रस्य पृथिव्या मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसने विनियोगः॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥

योगासनाय नमः। वीरासनाय नमः। शरासनाय नमः। ओं ऐं ह्रीं श्रीं ओं ह्रीं आधारशक्तिकमलासनाय नमः॥

इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत्॥

४ रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः।

इति भूमौ पुष्पाञ्जलिं विकिरेत्।

देहरक्षा।

४ श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष –

इति देहे त्रिः व्यापकं कृत्वा।

गुं गुरुभ्यो नमः । (दक्षबाहौ)

गं गणपतये नमः । (वामबाहौ)

दुं दुर्गायै नमः । (दक्षोरौ)

वं वटुकाय नमः । (वामोरौ)

यां योगिनीभ्यो नमः । (पादयोः)

क्षं क्षेत्रपालाय नमः । (नाभौ)

पं परमात्मने नमः । (हृदये)

४ ओं नमो भगवति तिरस्करिणि महामाये महानिद्रे सकल-पशुजनमनश्चक्षुःश्रोत्रतिरस्करणं कुरु कुरु स्वाहा ॥

४ हसन्ति हसितालापे मातङ्गिपरिचारिके मम भयविघ्नापदां नाशं कुरु कुरु ठः ठः ठः हुं फट् स्वाहा ॥

४ ओन्नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहार-कारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुं फट् स्वाहा ॥ इति परितो वह्नि-प्राकारं विभाव्य भूर्भुवस्सुवरों इति दिग्बन्धः ।

परमामृतवर्षेण प्लावयन्तं चराचरम् ।
संचिन्त्य परमद्वैतभावनाऽमृतसेवया ॥ १ ॥
मोदमानो विस्मृतान्यविकल्पविभवभ्रमः ।
चिदम्बुधिमहाभङ्गच्छिन्नसंकोचसङ्कटः ॥ २ ॥
समुल्लसन्महानादलोकनोऽन्तर्मुखायनः ।
मन्त्रमय्या मनोवृत्त्या परमाद्वैतमीहते ॥ ३ ॥

सपर्या सर्वभावेषु सा परा परिकीर्तिता ।
अपरा तु बहिर्वक्ष्यमाणचक्रार्चनाविधिः ॥ ४ ॥
परापरास्य बाह्यस्य चिद्व्योम्नि विलयः स्मृता ।
इत्थं त्रिधा समुद्दिष्टा बाह्याभ्यन्तरभेदतः ॥ ५ ॥
एवं भावयित्वा

४ समस्तप्रकट-गुप्त-गुप्ततर-संप्रदाय-कुलोत्तीर्ण-निगर्भ-रहस्यातिरहस्य-परापरातिरहस्ययोगिनीदेवताभ्यो नमः ॥

इति पुष्पाञ्जलिं दत्वा ।

४ ऐं हः अस्त्राय फट् ॥ इति अस्त्रमन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादिकनिष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ।

४ श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक ।
अनुज्ञां देहि भगवन् श्रीचक्रयजनाय मे ॥

४ अतिक्रूर महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥

लघुप्राणप्रतिष्ठा ।

४ ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं ओं हंसः सोहं । सोहं हंसः शिवः । श्रीचक्रस्य प्राणा इह प्राणाः ॥

४ ओं आं ह्रीं क्रों श्रीचक्रस्य जीव इह स्थितः । सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणा इहैवागत्य अस्मिन् चक्रे सुखं चिरं तिष्ठन्तु स्वाहा ॥

४ ओं असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ।
ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नस्स्वस्ति ॥

## मन्दिरपूजा ।

ओं ऐं ह्रीं श्रीं अमृताम्भोनिधये नमः
४ रत्नद्वीपाय नमः
४ नानावृक्षमहोद्यानाय नमः
४ कल्पवाटिकायै नमः
४ संतानवाटिकायै नमः
४ हरिचन्दनवाटिकायै नमः
४ मन्दारवाटिकायै नमः
४ पारिजातवाटिकायै नमः
४ कदम्बवाटिकायै नमः
४ पुष्परागरत्नप्राकाराय नमः
४ पद्मरागरत्नप्राकाराय नमः
४ गोमेधकरत्नप्राकाराय नमः
४ वज्ररत्नप्राकाराय नमः
४ वैडूर्यरत्नप्राकाराय नमः
४ इन्द्रनीलरत्नप्राकाराय नमः
४ मुक्तारत्नप्राकाराय नमः
४ मरकतरत्नप्राकाराय नमः
४ विद्रुमरत्नप्राकाराय नमः

ओं ऐं ह्रीं श्रीं माणिक्यमण्टपाय नमः
४ सहस्रस्तम्भमण्टपाय नमः
४ अमृतवापिकायै नमः
४ आनन्दवापिकायै नमः
४ विमर्शवापिकायै नमः
४ बालातपोद्गाराय नमः
४ चन्द्रिकोद्गाराय नमः
४ महाश्रृङ्गारपरिघायै नमः
४ महापद्माटव्यै नमः
४ चिन्तामणिमयगृहराजाय नमः
४ पूर्वाम्नायमयपूर्वद्वाराय नमः
४ दक्षिणाम्नायमयदक्षिणद्वाराय नमः
४ पश्चिमाम्नायमयपश्चिमद्वाराय नमः
४ उत्तराम्नायमयोत्तरद्वाराय नमः
४ रत्नप्रदीपवलयाय नमः
४ मणिमयमहासिंहासनाय नमः
४ ब्रह्ममयैकमञ्चपादाय नमः
४ विष्णुमयैकमञ्चपादाय नमः
४ रुद्रमयैकमञ्चपादाय नमः
४ ईश्वरमयैकमञ्चपादाय नमः
४ सदाशिवमयैकमञ्चफलकाय नमः
४ हंसतूलिकातल्पाय नमः
४ हंसतूलिकामहोपधानाय नमः

ओं ऐं ह्रीं श्रीं कौसुम्भास्तरणाय नमः
४ महावितानकाय नमः
४ महामायायवनिकायै नमः

इति चतुश्चत्वारिंशन्मन्दिरमन्त्रैः तत्तदखिलं भावयन्कुसुमाक्षतैरभ्यर्चयेत् ।

## दीपपूजा ।

स्वदक्षभागे गन्धपुष्पाक्षतादीन्निधाय दीपानभितः प्रज्वाल्य ॥

घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः ।
सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः ॥
(दक्षवामभागौ देव्या एव)

४ दीपदेवि महादेवि शुभं भवतु मे सदा ।
यावत्पूजासमाप्तिः स्यात्तावत्प्रज्वल सुस्थिरा ॥

इति पुष्पाञ्जलिं दद्यात् ।

मूलेन चक्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्रवामदक्षकोणेषु पुष्पाञ्जलीन्दद्यात् ।

## ॥ द्वितीयः खण्डः ॥

भूतशुद्ध्यादि विघ्नोत्सारणान्तम् ।

### भूतशुद्धिः ।

श्वाससमीरं पिङ्गलया अन्तराकृष्य –

**४ मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा** – इति मन्त्रेण मूलाधारस्थितं जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवेन एकीभूतं विभाव्य इडया वायुं रेचयेत् ॥

**४ यं** [१६.] (इडया पूरयित्वा) **संकोचशरीरं शोषय शोषय स्वाहा** – इति निजशरीरं शोषितं विभाव्य पिङ्गलया रेचयेत् ॥

**४ रं** [१६.] (पिङ्गलया पूरयित्वा) **संकोचशरीरं दह दह पच पच स्वाहा** – इति प्लुष्टं भस्मीकृतं च विभाव्य इडया रेचयेत् ॥

**४ वं** [१६.] (इडया पूरयित्वा) **परमशिवामृतं वर्षय वर्षय स्वाहा** – इति तद्भस्म सहस्रारेन्दुमण्डलविगलदमृतरसेन सिक्तं च विभाव्य पिङ्गलया रेचयेत् ॥

**४ लं** [१६.] (पिङ्गलया पूरयित्वा) **शांभवशरीरमुत्पादयोत्पादय स्वाहा** – इति तद्भस्मनो दिव्यशरीरमुत्पन्नं विभाव्य इडया रेचयेत् ॥

४ हंसः सोहं (इडया पूरयित्वा) अवतर अवतर शिव-पदात् जीव सुषुम्नापथेन प्रविश मूलशृङ्गाटकं उल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोहं स्वाहा - इति परम-शिवेनैकीकृतं जीवं पुनः सुषुम्नावर्त्मना मूलाधारे स्थापितं चिन्तयेत् ॥

आत्मप्राणप्रतिष्ठा ।

हृदि दक्षकरतलं निधाय – ४ आं सोहं – इति त्रिः पठेत् ॥

अथ मूलेन षोडशधा दशधा त्रिधा वा प्राणानायम्य ॥

विघ्नोत्सारणम् ।

४ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति मन्त्रमुच्चार्य युगपद्वामपार्ष्णिभूतलाघातत्रय-करास्फोटनत्रय-क्रूरदृष्ट्यवलोकनपूर्वक-तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् ॥

अथ **नमः** इति अङ्गुष्ठमन्त्रमुच्चारयन् अङ्कुशमुद्रया शिखां बध्नीयात् ॥

# ॥ तृतीयः खण्डः ॥

## ॥ न्यासाः ॥

### मातृकान्यासः ।

अस्य श्रीमातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीमातृकासरस्वती देवता । हल्भ्यो बीजेभ्यो नमः । स्वरेभ्यः शक्तिभ्यो नमः । बिन्दुभ्यः कीलकेभ्यो नमः । मम श्रीविद्याङ्गत्वेन न्यासे विनियोगः ॥

सर्वमातृकया सर्वाङ्गे अञ्जलिना त्रिर्व्यापकं कुर्यात् ॥

* ७ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः
७ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः
७ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः
७ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः
७ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः
७ अं यं रं लं वं शं षं सं हं ळं क्षं अः
करतलकरपृष्ठाभ्यां नमः

एवं हृदयादिन्यासः । भूर्भुवस्सुवरोम् इति दिग्बन्धः ॥

---

* ७ = ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः इत्यस्य संकेतः ।

ध्यानम्।

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम्।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि॥

लमित्यादि पञ्चपूजां कृत्वा।

बहिर्मातृका।

मातृकाः त्रितारीबालापूर्विकाः 'नमः हंसः' इत्यन्ताः स्वाङ्गेषु न्यसेत्।

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः
अं नमः हंसः (शिरसि)
७ आं ” (मुखवृत्ते)
७ इं ” (दक्षनेत्रे)
७ ईं ” (वामनेत्रे)
७ उं ” (दक्षकर्णे)
७ ऊं ” (वामकर्णे)
७ ऋं ” (दक्षनासापुटे)
७ ॠं ” (वामनासापुटे)
७ ऌं ” (दक्षकपोले)
७ ॡं ” (वामकपोले)
७ एं ” (ऊर्ध्वोष्ठे)
७ ऐं ” (अधरोष्ठे)

ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः
ओं नमः हंसः (ऊर्ध्वदन्तपंक्तौ)
७ औं ” (अधोदन्तपंक्तौ)
७ अं ” (जिह्वाग्रे)
७ अः ” (कण्ठे)
७ कं ” (दक्षबाहुमूले)
७ खं ” (दक्षकूर्परे)
७ गं ” (दक्षमणिबन्धे)
७ घं ” (दक्षकराङ्गुलिमूले)
७ ङं ” (दक्षकराङ्गुल्यग्रे)
७ चं ” (वामबाहुमूले)
७ छं ” (वामकूर्परे)
७ जं ” (वाममणिबन्धे)

| | | | | | |
|---|---|---|---|---|---|
| ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः | | | ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः | | |
| झं नमः हंसः | | (वामकराङ्गुलिमूले) | नं नमः हंसः | | (वामपादाङ्गुल्यग्रे) |
| ७ ञं | ” | (वामकराङ्गुल्यग्रे) | ७ पं | ” | (दक्षपार्श्वे) |
| ७ टं | ” | (दक्षोरुमूले) | ७ फं | ” | (वामपार्श्वे) |
| ७ ठं | ” | (दक्षजानुनि) | ७ बं | ” | (पृष्ठे) |
| ७ डं | ” | (दक्षगुल्फे) | ७ भं | ” | (नाभौ) |
| ७ ढं | ” | (दक्षपादाङ्गुलिमूले) | ७ मं | ” | (जठरे) |
| ७ णं | ” | (दक्षपादाङ्गुल्यग्रे) | ७ यं | ” | (हृदये) |
| ७ तं | ” | (वामोरुमूले) | ७ रं | ” | (दक्षकक्षे) |
| ७ थं | ” | (वामजानुनि) | ७ लं | ” | (गलपृष्ठे) |
| ७ दं | ” | (वामगुल्फे) | ७ वं | ” | (वामकक्षे) |
| ७ धं | ” | (वामपादाङ्गुलिमूले) | | | |

| | | |
|---|---|---|
| ७ शं | ” | (हृदयादिदक्षकराङ्गुल्यन्तम्) |
| ७ षं | ” | (हृदयादिवामकराङ्गुल्यन्तम्) |
| ७ सं | ” | (हृदयादिदक्षपादाङ्गुल्यन्तम्) |
| ७ हं | ” | (हृदयादिवामपादाङ्गुल्यन्तम्) |
| ७ ळं | ” | (कट्यादिपादाङ्गुल्यन्तम्) |
| ७ क्षं | ” | (कट्यादिब्रह्मरन्ध्रान्तम्) |

अन्तर्मातृका।

७ अं नमः हंसः। आं नमः हंसः + + अः नमः हंसः॥
कण्ठे विशुद्धिचक्रे षोडशदलकमले॥

७ कं नमः हंसः । खं नमः हंसः + + ठं नमः हंसः ॥
हृदये अनाहते द्वादशदलकमले ॥

७ डं नमः हंसः । ढं नमः हंसः + + फं नमः हंसः ॥
नाभौ मणिपूरे दशदलकमले ॥

७ बं नमः हंसः । भं नमः हंसः + + लं नमः हंसः ॥
लिङ्गमूले स्वाधिष्ठाने षड्दलकमले ॥

७ वं नमः हंसः । शं नमः हंसः + + सं नमः हंसः ॥
गुदोपरि मूलाधारे चतुर्दलकमले ॥

७ हं नमः हंसः । क्षं नमः हंसः ॥ भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले ॥

७ अं नमः हंसः । आं नमः हंसः + + क्षं नमः हंसः ॥
(५० वर्णाः) मूर्ध्नि सहस्रारे ॥

## करशुद्धिन्यासः ।

४ अं नमः (दक्षकरतले)
४ आं नमः (तत्पृष्ठे)
४ सौः नमः (तत्पार्श्वयोः)
४ अं नमः (वामकरतले)
४ आं नमः (तत्पृष्ठे)
४ सौः नमः (तत्पार्श्वयोः)
४ अं नमः (मध्यमयोः)
४ आं नमः (अनामिकयोः)
४ सौः नमः (कनिष्ठिकयोः)
४ अं नमः (अङ्गुष्ठयोः)
४ आं नमः (तर्जन्योः)
४ सौः नमः (करतलकरपृष्ठयोः)

आत्मरक्षान्यासः।

४ ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष इत्यञ्जलिं हृदये दद्यात्॥

बालाषडङ्गन्यासः।

४ ऐं हृदयाय नमः
४ क्लीं शिरसे स्वाहा
४ सौः शिखायै वषट्
४ ऐं कवचाय हुम्
४ क्लीं नेत्रत्रयाय वौषट्
४ सौः अस्त्राय फट्

चतुरासनन्यासः।

४ ह्रीं क्लीं सौः देव्यात्मासनाय नमः (पादयोः)
४ हैं ह्क्लीं ह्सौः श्रीचक्रासनाय नमः (जान्वोः)
४ ह्सैं ह्स्क्लीं ह्स्सौः सर्वमन्त्रासनाय नमः (ऊरुमूले)
४ ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः (मूलाधारे)

वाग्देवतान्यासः।

४ अं आं ++ अः ब्लूं वशिनीवाग्देवतायै नमः (शिरसि)
४ कं खं गं घं ङं क्लह्रीं कामेश्वरीवाग्देवतायै नमः (ललाटे)
४ चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै नमः (भ्रूमध्ये)
४ टं ठं डं ढं णं य्लूं विमलावाग्देवतायै नमः (कण्ठे)
४ तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः (हृदये)
४ पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतायै नमः (नाभौ)
४ यं रं लं वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः (गुह्ये)
४ शं षं सं हं ळं क्षं क्ष्म्रीं कौळिनीवाग्देवतायै नमः (मूलाधारे)

बहिश्चक्रन्यासः ।

४ अं आं सौः चतुरश्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरा-देव्यै नमः (पादयोः)

४ ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठा-त्र्यै कामाकर्षिण्यादिषोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (जान्वोः)

४ ह्रीं क्लीं सौः अष्टदळपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहितगुप्ततरयोगिनीरूपायै त्रिपुर-सुन्दरीदेव्यै नमः (ऊरुमूलयोः)

४ हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधि-ष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दशशक्तिसहितसंप्रदाययोगिनी-रूपायै त्रिपुरवासिनीदेव्यै नमः (नाभौ)

४ ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधि-ष्ठात्र्यै सर्वसिद्धिप्रदादिदशशक्तिसहितकुळोत्तीर्णयोगिनी-रूपायै त्रिपुराश्रीदेव्यै नमः (हृदये)

४ ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्व-ज्ञादिदशशक्तिसहितनिगर्भयोगिनीरूपायै त्रिपुरमालिनी-देव्यै नमः (कण्ठे)

४ ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशि-न्याद्यष्टशक्तिसहितरहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (मुखे)

४ ह्स्रैं ह्स्क्लीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधि-ष्ठात्र्यै कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (नेत्रयोः)

४ पञ्चदशी बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुध-दशशक्तिसहितपरापरातिरहस्ययोगिनीरूपायै महात्रिपुर-सुन्दरीदेव्यै नमः (मूर्ध्नि)

अन्तश्चक्रन्यासः।

४ अं आं सौः चतुरश्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरा-देव्यै नमः (अधःसहस्रारे)

४ ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशापरिपूरकचक्राधि-ष्ठात्र्यै कामाकर्षिण्यादिषोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (अधःसहस्रारस्योपरि विषुसंज्ञे षड्दले)

४ ह्रीं क्लीं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्तिसहितगुप्ततरयोगिनीरूपायै त्रिपुर-सुन्दरीदेव्यै नमः (मूलाधारे)

४ हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दशशक्तिसहितसंप्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः (स्वाधिष्ठाने)

४ हसैं हस्क्लीं हस्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादिदशशक्तिसहितकुळोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः (मणिपूरे)

४ ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहितनिगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः (अनाहते)

४ ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्तिसहितरहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (विशुद्धौ)

४ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रिशक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (लम्बिकाग्रे)

४ पञ्चदशी बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहितपरापरातिरहस्ययोगिनीरूपायै महात्रिपुरसुन्दरीदेव्यै नमः (आज्ञायाम्)

पुनः आज्ञाचक्रस्य एकैकाङ्गुलोपरि देशे -

अं आं सौः नमः (बिन्दौ)
ऐं क्लीं सौः नमः (अर्धचन्द्रे)
ह्रीं क्लीं सौः नमः (रोधिन्याम्)
हैं ह्क्लीं ह्सौः नमः (नादे)
ह्सैं ह्स्क्लीं ह्स्सौः नमः (नादान्ते)
ह्रीं क्लीं ब्लें नमः (शक्तौ)
ह्रीं श्रीं सौः नमः (व्यापिकायाम्)
ह्स्रैं ह्स्क्ल्रीं ह्स्रौः नमः (समनायाम्)
पञ्चदशी नमः (उन्मनायाम्)
षोडशी नमः (ब्रह्मरन्ध्रे महाबिन्दौ) ॥

कामेश्वर्यादिन्यासः।

४ ऐं कएईलह्रीं अग्निचक्रे कामगिरिपीठे मित्रेशनाथ-नवयोनिचक्रात्मक-आत्मतत्त्व-सृष्टिकृत्य-जाग्रद्दशाधिष्ठायकेच्छाशक्ति-वाग्भवात्मक-वागीश्वरीस्वरूप-महाकामेश्वरी-ब्रह्मात्मशक्तिश्रीपादुकां पूजयामि नमः। (मूलाधारे)

४ क्लीं हसकहलह्रीं सूर्यचक्रे पूर्णगिरिपीठे षष्ठीशनाथ-दशारद्वयचतुर्दशारचक्रात्मक-विद्यातत्त्व-स्थितिकृत्य-स्वप्नदशाधिष्ठायक-ज्ञानशक्ति-कामराजात्मक-कामकलास्वरूप-महावज्रेश्वरी-विष्णवात्मशक्तिश्रीपादुकां पूजयामि नमः। (अनाहते)

४ सौः सकलह्रीं सोमचक्रे जालन्धरपीठे उड्डीशनाथ-अष्टदळषोडशदळचतुरश्रचक्रात्मक-शिवतत्व-संहारकृत्य-सुषुप्तिदशाधिष्ठायक-क्रियाशक्ति-शक्तिबीजात्मक-परापरशक्तिस्वरूप-महाभगमालिनी रुद्रात्मशक्तिश्रीपादुकां पूजयामि नमः। (आज्ञायाम्)

४ ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ-समस्तचक्रात्मक-सपरिवार-परमतत्त्व-सृष्टिस्थितिसंहारकृत्य-तुरीयदशाधिष्ठायकेच्छा-ज्ञानक्रियाशान्ताशक्ति-वाग्भवकामराजशक्तिबीजात्मक-परमशक्तिस्वरूप-श्रीमहात्रिपुरसुन्दरी-परब्रह्मात्मशक्ति-श्रीपादुकां पूजयामि नमः। (ब्रह्मरन्ध्रे)

मूलविद्यान्यासः।

४ कं नमः (शिरसि)
४ एं नमः (मूलाधारे)
४ ईं नमः (हृदि)
४ लं नमः (दक्षनेत्रे)
४ ह्रीं नमः (वामनेत्रे)
४ हं नमः (भ्रूमध्ये)
४ सं नमः (दक्षश्रोत्रे)
४ कं नमः (वामश्रोत्रे)
४ हं नमः (मुखे)
४ लं नमः (दक्षभुजे)

४ ह्रीं नमः (वामभुजे)
४ सं नमः (पृष्ठे)
४ कं नमः (दक्षजानुनि)
४ लं नमः (वामजानुनि)
४ ह्रीं नमः (नाभौ)

अथ ऋष्यादिषडङ्गन्यासं यथोपदेशं कुर्यात्॥

## षोडश्युपासकानां विशेषन्यासाः।

### श्रीषोडशाक्षरीन्यासः।

४ मूलं **नमः**। दक्षमध्यमानामिकाभ्यां शिरसि न्यसेत्। तत्र तां दीपाभां स्रवत्सुधारसां महासौभाग्यदां ध्यात्वा॥

४ मूलं नमः **महासौभाग्यं मे देहि परसौभाग्यं दण्डयामि।** सौभाग्यदण्डिन्या मुद्रया वामकर्णसंवेष्टनपूर्वकं आमस्तकचरणं वामाङ्गे न्यसेत्॥

४ मूलं नमः **मम शत्रून्निगृह्णामि।** रिपुजिह्वाग्रया मुद्रया वामपादाधो न्यसेत्॥

४ मूलं नमः **त्रैलोक्यस्याहं कर्ता।** त्रिखण्डया मुद्रया फाले न्यसेत्॥

४ मूलं **नमः**। त्रिखण्डया मुद्रया मुखवेष्टनत्वेन न्यसेत्॥

४ मूलं **नमः**। त्रिखण्डया मुद्रया दक्षकर्णादिवामकर्णान्तं मुखवेष्टनत्वेन न्यसेत्॥

४ **ओं** मूलं **नमः**। त्रिखण्डया गळोर्ध्वमामस्तकं न्यसेत्॥

४ ओं मूलं ओं **नमः**। त्रिखण्डया मुद्रया मस्तकात् पादपर्यन्तं पादादामस्तकं च न्यसेत्॥

४ मूलं **नमः**। योनिमुद्रया मुखे न्यसेत्॥

४ मूलं **नमः**। योनिमुद्रया ललाटे न्यसेत्॥

संमोहनन्यासः।

४ मूलम्। मूलविद्यां स्मृत्वा तत्प्रभया जगदरुणं विभावयन् अनामिकां मूर्ध्नि त्रिः परिभ्राम्य –

४ मूलम्। ब्रह्मरन्ध्रे अङ्गुष्ठानामिके न्यसेत्॥

४ मूलम्। मणिबन्धद्वये ,,

४ मूलम्। फाले ,,

४ मूलम्। शाक्ततिलकं धारयेत्॥

| | संहारन्यासः | सृष्टिन्यासः | स्थितिन्यासः |
|---|---|---|---|
| ४ श्रीं नमः | पादयोः | ब्रह्मरन्ध्रे | अङ्गुष्ठयोः |
| ४ ह्रीं नमः | जङ्घयोः | फाले | तर्जन्योः |
| ४ क्लीं नमः | जान्वोः | नेत्रयोः | मध्यमयोः |
| ४ ऐं नमः | कटिभागद्वये | कर्णयोः | अनामिकयोः |
| ४ सौः नमः | पृष्ठे | नासापुटयोः | कनिष्ठिकयोः |
| ४ ओं नमः | लिङ्गे | गण्डयोः | मूर्ध्नि |
| ४ ह्रीं नमः | नाभौ | दन्तपङ्क्तौ | मुखे |
| ४ श्रीं नमः | पार्श्वयोः | ओष्ठयोः | हृदि |
| ४ क-५ नमः | स्तनयोः | जिह्वायाम् | नाभेः आपादद्वयम् |

| | | | |
|---|---|---|---|
| ४ ह-६ नमः | अंसयोः | कण्ठे | कण्ठादिनाभ्यन्तम् |
| ४ स-४ नमः | कर्णयोः | पृष्ठे | मूर्धादिकण्ठान्तम् |
| ४ सौः नमः | मूर्ध्नि | सर्वाङ्गे | पादाङ्गुष्ठयोः |
| ४ ऐं नमः | मुखे | हृदि | पादतर्जन्योः |
| ४ क्लीं नमः | नेत्रयोः | स्तनयोः | पादमध्यमयोः |
| ४ ह्रीं नमः | कर्णयुगसन्निधौ | उदरे | पादानामिकयोः |
| ४ श्रीं नमः | कर्णवेष्टनयोः | लिङ्गे | पादकनिष्ठिकयोः |

न्यस्य मूलेन देहे व्यापकं कुर्यात्।

# ॥ चतुर्थः खण्डः ॥

## पात्रासादनम् ।

## वर्धनीकलशस्थापनम् ।

स्वपुरतः वामभागे त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य –



मण्डलं मूलेन समभ्यर्च्य, कर्पूरादिवासितजलपूरितं कलशं गन्धपुष्पाक्षतैः अलंकृत्य मण्डलोपरि संस्थापयेत् ॥

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥
अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ।

ॐ आपो वा इदँ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापः

छन्दाँस्यापो ज्योतीँष्यापो यजूँष्यापः सत्यमापः सर्वा देवता
आपो भूर्भुवस्सुवराप ओम् ॥
गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥
सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः।
आयान्तु देवीपूजार्थं दुरितक्षयकारकाः ॥

मूलेन अष्टवारमभिमन्त्र्य, धेनुमुद्रां प्रदर्श्य, तज्जलेन पूजोपकरणानि आत्मानं च प्रोक्षयेत् ॥

## सामान्यार्घ्यविधिः।

वर्धनीपात्रस्य दक्षिणतः वर्धनीपात्रगतेन जलेन बिन्दु-त्रिकोण-षट्-कोण-वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय ॥




चतुरश्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च बालाषडङ्गैः संपूजयेत्।
यथा –

४ ऐं हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः ॥
४ क्लीं शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां ,,
४ सौः शिखायै वषट् । शिखाशक्तिश्रीपादुकां ,,
४ ऐं कवचाय हुम् । कवचशक्तिश्रीपादुकां ,,
४ क्लीं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां ,,
४ सौः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां ,,

षट्कोणे स्वाग्रादिप्रादक्षिण्येन –

४ ऐं क-५ हृदयाय नमः । हृदयशक्तिश्रीपादुकां ,,
४ क्लीं ह-६ शिरसे स्वाहा । शिरःशक्तिश्रीपादुकां ,,
४ सौः स-४ शिखायै वषट् । शिखाशक्तिश्रीपादुकां ,,
४ ऐं क-५ कवचाय हुम् । कवचशक्तिश्रीपादुकां ,,
४ क्लीं ह-६ नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां ,,
४ सौः स-४ अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां ,,

त्रिकोणे स्वाग्रादिप्रादक्षिण्येन –

४ ऐं क-५ नमः ४ सौः स-४ नमः
४ क्लीं ह-६ नमः ४ मूलं नमः (बिन्दौ)

ततः ४ अस्त्राय फट् - इति सामान्यार्घ्यपात्रस्य आधारं प्रक्षाल्य ।

४ अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीमहात्रिपुर-सुन्दर्याः सामान्यार्घ्यपात्राधाराय नमः ॥
इति मण्डलस्योपरि संस्थाप्य ॥

४ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम् । रां रीं रूं रैं रौं रः रमलवरयूम् अग्निमण्डलाय नमः ।
इति अग्निमण्डलं विभाव्य दश वह्निकलाः संपूजयेत् । तद्यथा -

४ यं धूम्रार्चिष्कलायै नमः
४ रं ऊष्मा "
४ लं ज्वलिनी "
४ वं ज्वालिनी "
४ शं विस्फुलिङ्गिनी "
४ षं सुश्री "
४ सं सुरूपा "
४ हं कपिला "
४ ळं हव्यवाहिनी "
४ क्षं कव्यवाहिनी "

४ अस्त्राय फट् । इति क्षालितं शङ्खं गृहीत्वा ।

४ उं सूर्यमण्डलायार्थप्रदद्वादशकलात्मने श्रीमहात्रिपुरसुन्दर्याः सामान्यार्घ्यपात्राय नमः । इति संस्थाप्य ।

४ आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् । हां हीं हूं हैं हौं हः । हमलवरयूम् । सूर्यमण्डलाय नमः ।
इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः संपूजयेत् ।

तद्यथा –




| | | | |
|---|---|---|---|
| ४ कं भं तपिनीकलायै नमः | | ४ छं दं सुषुम्नाकलायै नमः | |
| ४ खं बं तापिनी | ,, | ४ जं थं भोगदा | ,, |
| ४ गं फं धूम्रा | ,, | ४ झं तं विश्वा | ,, |
| ४ घं पं मरीची | ,, | ४ ञं णं बोधिनी | ,, |
| ४ ङं नं ज्वालिनी | ,, | ४ टं ढं धारिणी | ,, |
| ४ चं धं रुचि | ,, | ४ ठं डं क्षमा | ,, |

४ मं सोममण्डलाय कामप्रदषोडशकलात्मने महात्रिपुरसुन्दर्याः सामान्यार्घ्यामृताय नमः। इति वर्धनीसलिलमापूर्य क्षीरबिन्दुं दत्वा।

४ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियं भवावाजस्य संगथे। सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः। इति सोममण्डलं विभाव्य षोडश सोमकलाः संपूजयेत्।

तद्यथा –

| | |
|---|---|
| ४ अं अमृताकलायै नमः | ४ लं चन्द्रिकाकलायै नमः |
| ४ आं मानदा ” | ४ लॄं कान्ति ” |
| ४ इं पूषा ” | ४ एं ज्योत्स्ना ” |
| ४ ईं तुष्टि ” | ४ ऐं श्री ” |
| ४ उं पुष्टि ” | ४ ओं प्रीति ” |
| ४ ऊं रति ” | ४ औं अङ्गदा ” |
| ४ ऋं धृति ” | ४ अं पूर्णा ” |
| ४ ॠं शशिनी ” | ४ अः पूर्णामृता ” |

ततस्तस्मिन्शङ्खे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण षडङ्गैः संपूज्य, **अस्त्राय फट्** इति संरक्ष्य, **कवचाय हुम्** इति अवकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, मूलेन सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः पूजोपकरणानि आत्मानं च प्रोक्ष्य, शङ्खजलात् किंचिद्वर्धन्यां क्षिपेत्॥

## विशेषार्घ्यविधिः।

सामान्यार्घ्योदकेन तद्दक्षिणतः बिन्दु-त्रिकोण-षट्कोण-वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य, बिन्दौ सानुस्वारं तुरीयस्वरं विलिख्य, चतुरश्रे प्राग्वत् षडङ्गं विन्यस्य, षट्कोणे स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गैरभ्यर्च्य, त्रिकोणे मूलत्रिखण्डैः अभ्यर्च्य, मूलेन बिन्दुं च अर्चयेत्।

तद्यथा –




चतुरश्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च –

४ ऐं क-५ हृदयाय नमः। हृदयशक्तिश्रीपादुकां पूजयामि नमः
४ क्लीं ह-६ शिरसे स्वाहा। शिरःशक्तिश्रीपादुकां ”
४ सौः स-४ शिखायै वषट्। शिखाशक्तिश्रीपादुकां ”
४ ऐं क-५ कवचाय हुम्। कवचशक्तिश्रीपादुकां ”
४ क्लीं ह-६ नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां ”
४ सौः स-४ अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां ”

ततः षट्कोणे स्वाग्रादिप्रादक्षिण्येन –

४ ऐं क-५ हृदयाय नमः। हृदयशक्तिश्रीपादुकां ”
४ क्लीं ह-६ शिरसे स्वाहा। शिरःशक्तिश्रीपादुकां ”
४ सौः स-४ शिखायै वषट्। शिखाशक्तिश्रीपादुकां ”
४ ऐं क-५ कवचाय हुम्। कवचशक्तिश्रीपादुकां ”

४ क्लीं ह-६ नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां ,,
४ सौः स-४ अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां ,,

ततस्त्रिकोणे स्वाग्रादिप्रादक्षिण्येन –

४ ऐं क-५ नमः ४ सौः स-४ नमः
४ क्लीं ह-६ नमः ४ मूलं नमः (बिन्दौ)

षोडश्युपासकानां तु षोडशीमन्त्रेण सर्वत्र पूजा विधेया ।

अथ ४ **अस्त्राय फट्** - इति आधारं प्रक्षाल्य ।

४ ऐं क-५ अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीमहात्रिपुरसुन्दर्याः विशेषार्घ्यपात्राधाराय नमः ॥ इति आधारं संस्थाप्य ॥

४ अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसं अ॒स्य य॒ज्ञस्य॑ सु॒क्रतुम् । रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः ।
इति अग्निमण्डलं विभाव्य दश वह्निकलाः संपूजयेत् । यथा -

४ यं धूम्रार्चिष्कलायै नमः ४ षं सुश्रीकलायै नमः
४ रं ऊष्मा ,, ४ सं सुरूपा ,,
४ लं ज्वलिनी ,, ४ हं कपिला ,,
४ वं ज्वालिनी ,, ४ ळं हव्यवाहिनी ,,
४ शं विस्फुलिङ्गिनी ,, ४ क्षं कव्यवाहिनी ,,

ततः –

४ अस्त्राय फट् । इति अस्त्रमन्त्रेण विशेषार्घ्यपात्रं प्रक्षाल्य ।

४ क्लीं ह-६ उं सूर्यमण्डलायार्थप्रदद्वादशकलात्मने श्रीमहात्रिपुर-सुन्दर्याः विशेषार्घ्यपात्राय नमः । इति आधारोपरि संस्थाप्य ।

४ ह्रीं ऐं महालक्ष्मीश्वरि परमस्वामिनि ऊर्ध्वशून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छागच्छ विश विश पात्रं प्रतिगृह्ण प्रतिगृह्ण हुं फट् स्वाहा । इति पुष्पाञ्जलिं विकीर्य ॥

४ आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन् । हां हीं हूं हैं हौं हः हमलवरयूं सूर्यमण्डलाय नमः । इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः पूजयेत् ॥ यथा -

| | | | |
|---|---|---|---|
| ४ कं भं तपिनीकलायै नमः | | ४ छं दं सुषुम्नाकलायै नमः | |
| ४ खं बं तापिनी | ,, | ४ जं थं भोगदा | ,, |
| ४ गं फं धूम्रा | ,, | ४ झं तं विश्वा | ,, |
| ४ घं पं मरीचि | ,, | ४ ञं णं बोधिनी | ,, |
| ४ ङं नं ज्वालिनी | ,, | ४ टं ढं धारिणी | ,, |
| ४ चं धं रुचि | ,, | ४ ठं डं क्षमा | ,, |

## शुद्धिसंस्कारः ।

विशेषार्घ्यपात्रस्य दक्षिणतः सामान्यार्घ्योदकेन त्रिकोण-वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य *

---

* अस्य चित्रं २६ पुटे द्रष्टव्यम् ।

४ ओं ह्रीं ह्रौं नमःशिवाय। इति मण्डलमभ्यर्च्य शुद्धिपात्रं संस्थाप्य।

४ ओं श्लीं पशु हुं फट्। इति अष्टवारमभिमन्त्र्य।

४ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।
भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः॥

४ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥

४ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्व-शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥

४ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्॥

४ ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥ इत्यभ्यर्च्य॥

ततो विशेषार्घ्यपात्रे –

४ सौः स-४ मं सोममण्डलाय कामप्रदषोडशकलात्मने श्री-महात्रिपुरसुन्दर्या विशेषार्घ्यामृताय नमः। इति तत्त्वमुद्रया गृहीतनागरखण्डोपरि सबिन्दु अकारादिक्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितं अमृतमापूर्य अष्टगन्धलोलितं पुष्पं निधाय नागरखण्डं निक्षिप्य॥

**४ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्। भवावा-जस्य संगथे॥ सां सीं सूं सैं सौं सः समलवरयूं सोम-मण्डलाय नमः।** इति सोममण्डलं विभाव्य षोडश सोमकलाः पूजयेत्।

यथा –

| | | | |
|---|---|---|---|
| ४ अं अमृता कलायै नमः | | ४ ऌं चन्द्रिका कलायै नमः | |
| ४ आं मानदा | ,, | ॡं कान्ति | ,, |
| ४ इं पूषा | ,, | एं ज्योत्स्ना | ,, |
| ४ ईं तुष्टि | ,, | ऐं श्री | ,, |
| ४ उं पुष्टि | ,, | ओं प्रीति | ,, |
| ४ ऊं रति | ,, | औं अङ्गदा | ,, |
| ४ ऋं धृति | ,, | अं पूर्णा | ,, |
| ४ ॠं शशिनी | ,, | अः पूर्णामृता | ,, |

ततः **४ ओं जुंसः स्वाहा** इति अष्टवारमभिमन्त्र्य।

तत्राघ्यार्मृते स्वाग्राद्यप्रादक्षिण्येन अ-क-थादि-षोडशवर्णात्मक-रेखात्रयं त्रि-कोणं विलिख्य, तदन्तः स्वाग्रादि-कोणेषु अप्रादक्षिण्येन हळक्षान्, बहिः प्रादक्षिण्येन पञ्चदशीमूलखण्डत्रयं, बिन्दौ सबिन्दुतुरीयस्वरं, तद्वामदक्ष-योः क्रमेण हं सः इति च विलिख्य –



४ **हंसः नमः**। इति आराध्य, त्रिकोणस्य परितः वृत्तं, तद्बहिश्च षट्कोणं निर्माय, स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गमन्त्रैः षट्कोणमभ्यर्च्य।

४ **मूलं तां चिन्मयीमानन्दलक्षणाममृतकलशपिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा।**
इति सुधादेवीं समभ्यर्च्य तदर्घ्यात्किंचित् पात्रान्तरेण।

४ **वषट्**। इत्युद्धृत्य

४ **स्वाहा**। इति तत्रैव निक्षिप्य

४ **हुम्**। इति अवकुण्ठ्य

४ **वौषट्**। इति धेनुमुद्रया अमृतीकृत्य

४ **फट्**। इति संरक्ष्य

४ **नमः**। इति पुष्पं दत्वा

४ मूलेन गालिन्या निरीक्ष्य

४ **ऐम्**। इति योनिमुद्रया नत्वा

४ मूलेन सप्तवारमभिमन्त्र्य, सुधादेवीं षोडशोपचारैः संपूज्य तद्बिन्दुभिः सपर्यासाधनानि प्रोक्ष्य सर्वं विद्यामयं विभावयेत्।

ततः शुद्धिपात्रस्य अधः त्रिकोण-वृत्त-चतुरश्रात्मकं मण्डलद्वयं विलिख्य। प्रथममण्डले -

४ **हंसश्शिवस्सोहम्। सोहं हंसश्शिवः। हंसश्शिवस्सोहं हंसः। ह्स्ख्फ्रें हसक्षमलवरयूं नमः**। इत्यभ्यर्च्य, गुरुपात्रं निधाय द्वितीयमण्डले -

४ हंसः नमः। इत्यभ्यर्च्य, आत्मपात्रं निदध्यात्।

ततो विशेषार्घ्यपात्रं करेण संस्पृश्य वक्ष्यमाणचतुर्नवतिमन्त्रैः अभिमन्त्रयेत् -

वह्निकलाः।

| | | | |
|---|---|---|---|
| ४ यं धूम्रार्चिषे | नमः | ४ षं सुश्रियै | नमः |
| ४ रं ऊष्मायै | ,, | ४ सं सुरूपायै | ,, |
| ४ लं ज्वलिन्यै | ,, | ४ हं कपिलायै | ,, |
| ४ वं ज्वालिन्यै | ,, | ४ ळं हव्यवाहिन्यै | ,, |
| ४ शं विस्फुलिङ्गिन्यै | ,, | ४ क्षं कव्यवाहिन्यै | ,, |

सूर्यकलाः।

| | | | |
|---|---|---|---|
| ४ कं भं तपिन्यै | नमः | ४ छं दं सुषुम्नायै | नमः |
| ४ खं बं तापिन्यै | ,, | ४ जं थं भोगदायै | ,, |
| ४ गं फं धूम्रायै | ,, | ४ झं तं विश्वायै | ,, |
| ४ घं पं मरीच्यै | ,, | ४ ञं णं बोधिन्यै | ,, |
| ४ ङं नं ज्वालिन्यै | ,, | ४ टं ढं धारिण्यै | ,, |
| ४ चं धं रुच्यै | ,, | ४ ठं डं क्षमायै | ,, |

सोमकलाः।

| | | | |
|---|---|---|---|
| ४ अं अमृतायै | नमः | ४ ईं तुष्ट्यै | नमः |
| ४ आं मानदायै | ,, | ४ उं पुष्ट्यै | ,, |
| ४ इं पूषायै | ,, | ४ ऊं रत्यै | ,, |

| | | | |
|---|---|---|---|
| ४ ॠं धृत्यै | नमः | ४ ऐं श्रियै | नमः |
| ४ ॠं शशिन्यै | ” | ४ ओं प्रीत्यै | ” |
| ४ ऌं चन्द्रिकायै | ” | ४ औं अङ्गदायै | ” |
| ४ ॡं कान्त्यै | ” | ४ अं पूर्णायै | ” |
| ४ एं ज्योत्स्नायै | ” | ४ अः पूर्णामृतायै | ” |

ब्रह्मकलाः।

| | | | |
|---|---|---|---|
| ४ कं सृष्ट्यै | नमः | ४ चं लक्ष्म्यै | नमः |
| ४ खं ऋद्ध्यै | ” | ४ छं द्युत्यै | ” |
| ४ गं स्मृत्यै | ” | ४ जं स्थिरायै | ” |
| ४ घं मेधायै | ” | ४ झं स्थित्यै | ” |
| ४ ङं कान्त्यै | ” | ४ ञं सिद्ध्यै | ” |

४ हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ नमः॥

विष्णुकलाः।

| | | | |
|---|---|---|---|
| ४ टं जरायै | नमः | ४ तं कामिकायै | नमः |
| ४ ठं पालिन्यै | ” | ४ थं वरदायै | ” |
| ४ डं शान्त्यै | ” | ४ दं ह्लादिन्यै | ” |
| ४ ढं ईश्वर्यै | ” | ४ धं प्रीत्यै | ” |
| ४ णं रत्यै | ” | ४ नं दीर्घायै | ” |

४ प्रतद्विष्णुस्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ नमः ॥

रुद्रकलाः ।

| | | | |
|---|---|---|---|
| ४ पं तीक्ष्णायै | नमः | ४ यं क्षुधायै | नमः |
| ४ फं रौद्र्यै | ,, | ४ रं क्रोधिन्यै | ,, |
| ४ बं भयायै | ,, | ४ लं क्रियायै | ,, |
| ४ भं निद्रायै | ,, | ४ वं उद्गार्यै | ,, |
| ४ मं तन्द्र्यै | ,, | ४ शं मृत्यवे | ,, |

४ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ नमः ॥

ईश्वरकलाः ।

| | | | |
|---|---|---|---|
| ४ षं पीतायै | नमः | ४ हं अरुणायै | नमः |
| ४ सं श्वेतायै | ,, | ४ क्षं असितायै | ,, |

४ तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ नमः ॥

सदाशिवकलाः।

| | | | |
|---|---|---|---|
| ४ अं निवृत्त्यै | नमः | ४ लृं परायै | नमः |
| ४ आं प्रतिष्ठायै | ” | ४ लॄं सूक्ष्मायै | ” |
| ४ इं विद्यायै | ” | ४ एं सूक्ष्मामृतायै | ” |
| ४ ईं शान्त्यै | ” | ४ ऐं ज्ञानायै | ” |
| ४ उं इन्धिकायै | ” | ४ ओं ज्ञानामृतायै | ” |
| ४ ऊं दीपिकायै | ” | ४ औं आप्यायिन्यै | ” |
| ४ ऋं रोचिकायै | ” | ४ अं व्यापिन्यै | ” |
| ४ ॠं मोचिकायै | ” | ४ अः व्योमरूपायै | ” |

४ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा॥ नमः॥

४ मूलं नमः॥

४ अखण्डैकरसानन्दकरे परसुधात्मनि।
स्वच्छन्दस्फुरणामत्र निधेहि कुलनायिके॥ नमः॥

४ अकुलस्थामृताकारे शुद्धज्ञानकरे परे।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि॥ नमः॥

४ तद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत्स्वरूपिणि।
भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु॥ नमः॥

४ ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृत-
वर्षिणि अमृतं स्रावय स्रावय स्वाहा॥ नमः॥

४ ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु ह्सौः स्हौः॥ नमः॥

एवमभिमन्त्रितविशेषार्घ्यामृतात् किंचिद्गुरुपात्रे उद्धृत्य गुरुत्रयं यजेत्। गुरुः सन्निहितो यदि तस्मै निवेदयेत्।

पुनः आत्मपात्रे किंचिद्विशेषार्घ्यामृतमुद्धृत्य, मूलाधारे वालाग्रमात्रमनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितं चिदग्निमण्डलं ध्यात्वा -

४ कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः। इति मनसा संपूज्य

४ मूलं पूण्यं जुहोमि स्वाहा
४ मूलं पापं ,,
४ मूलं कृत्यं ,,
४ मूलम् अकृत्यं ,,
४ मूलं सङ्कल्पं ,,
४ मूलं विकल्पं ,,
४ मूलं धर्मं ,,
४ मूलम् अधर्मं ,,

४ मूलम् अधर्मं जुहोमि वौषट्

४ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्याम् उदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। इति पूर्णाहुतिं विभाव्य

४ आर्द्रं ज्वलति ज्योतिरहमस्मि
ज्योतिर्ज्वलति ब्रह्माहमस्मि ।
योऽहमस्मि ब्रह्माहमस्मि
अहमस्मि ब्रह्माहमस्मि ।
अहमेवाहं मां जुहोमि स्वाहा ॥

इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात् । विशेषार्घ्यपात्रात्किंचित्क्षीरं कारणकलशे निक्षिपेत् ।

## ॥ पञ्चमः खण्डः ॥

### अन्तर्यागादि लयाङ्गपूजान्तम्।

### अन्तर्यागः।

एवं निरस्तनिखिलदोषः सन् आमूलाधारादाब्रह्मबिलं विलसन्तीं विसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेत्।

ततस्तत्तेजसि–

मूलाधारादधोगते अकुलसहस्रारे भूपुरस्थितदेवीः,

तदुपरि स्थिते विषुवनाम्नि रक्तवर्णषड्दलपद्मे षोडशदलदेवीः,

मूलाधारे चतुर्दले अष्टदलदेवीः,

स्वाधिष्ठाने षड्दले चतुर्दशारदेवीः,

मणिपूरके दशदले बहिर्दशारदेवीः,

अनाहते द्वादशदले अन्तर्दशारदेवीः,

विशुद्धौ षोडशदले अष्टारदेवीः,

लम्बिकाग्रे आयुधदेवीः त्रिकोणदेवीश्च,

आज्ञायां द्विदले बिन्दुगतदेवीं च,

ध्यात्वा तत्तदग्रे जीवात्मानं पुष्पपूरिताञ्जलिं निविष्टं भावयन् तत्तत्पूजामन्त्रैः तत्तदावरणपूजां, देव्या वामहस्ते पूजासमर्पणं च विभाव्य, श्रीमहात्रिपुरसुन्दर्यां सचक्रावयवानि आवरणानि विलीनानि विभाव्य, मध्यत्र्यश्राग्रे (देवीपादमूले) स्थितजीवात्मना सहितां श्रीदेवीं हृदयं नीत्वा स्वाञ्जलिगतकुसुमैः तत्र तां संपूज्य, ततः अकुलेन्दु-

गलितामृतधारारूपिणीः चन्दनकुसुमधूपदीपनैवेद्यशालिकरकमलाः पीतासितश्यामरक्तशुक्लवर्णाः धरणिवियदनिलानलजललक्षणपञ्चभूतमयीः सर्वावयवसुन्दरीः पञ्चदेवताः देव्यग्रे संस्मृत्य, ताभिः चन्दनाद्युपचारान् श्रीदेव्यै समर्पितान् स्मारं स्मारं पञ्चोपचारमुद्राश्च प्रदर्शिता भावयेत् ॥

ततो देव्या नासायां गन्धदेवता, श्रोत्रे पुष्पदेवता, नाभौ धूपदेवता, नयने दीपदेवता, जिह्वायां नैवेद्यदेवता इति क्रमेण विलीनाः विभाव्य, मूलविद्यामुच्चरन्, जीवात्मानं श्रीदेवीपादारविन्दमूले लीनं विभाव्य, हृदयगतदेवीरूपं मध्यत्र्यश्रसहितं तत्रैव केवलं ज्योतिर्मयतामापन्नं ध्यायन् संक्षोभिण्यादिनवमुद्राः* भावयित्वा, क्षणं न किंचिदपि चिन्तयेत् ॥

अथ देव्या प्रेरितमानसः सन् पुनः प्रकृतिमालम्ब्य तेजोरूपेण परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकां स्वात्माभिन्नां परचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदलकमलाद्वहन्नासापुटेन निर्गतां त्रिखण्डमुद्रामण्डितशिखण्डे कुसुमगर्भितेऽञ्जलौ समानीय–

**४ ह्रीं श्रीं सौः श्रीललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः ॥**

---

* षोडश्युपासकानां तु दशमुद्राः ।

ध्यानम् ।

ध्यायेन्निरामयं वस्तु जगत्त्रयविमोहिनीम् ।
अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ॥ १ ॥

उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् ।
जपाकुसुमसंकाशां पद्मरागमणिप्रभाम् ॥ २ ॥

स्फुरत्पद्मनिभां तप्तकाञ्चनाभां सुरेश्वरीम् ।
रक्तोत्पलदलाकारपादपल्लवराजिताम् ॥ ३ ॥

अनर्घरत्नखचितमञ्जीरचरणद्वयाम् ।
पादाङ्गुलीयकक्षिप्तरत्नतेजोविराजिताम् ॥ ४ ॥

कदलीललितस्तम्भसुकुमारोरुकोमलाम् ।
नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ॥ ५ ॥

मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् ।
अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ॥ ६ ॥

रोमराजिलतोद्भूतमहाकुचफलान्विताम् ।
सुवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ॥ ७ ॥

अनर्घमौक्तिकस्फारहारभारविराजिताम् ।
नवरत्नप्रभाराजद्ग्रैवेयकविभूषणाम् ॥ ८ ॥

श्रुतिभूषामनोरम्यकपोलस्थलमञ्जुलाम् ।
उद्यदादित्यसंकाशताटङ्कसुमुखप्रभाम् ॥ ९ ॥

पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् ।
स्फुरन्मदनकोदण्डसुभ्रुवं पद्मलोचनाम् ॥ १० ॥

ललाटपट्टसराजद्रत्नाढ्यतिलकाङ्किताम् ।
मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ॥ ११ ॥

स्फुरच्चन्द्रकलाराजन्मुकुटां च त्रिलोचनाम् ।
प्रवालवल्लीविलसद्बाहुवल्लीचतुष्टयाम् ॥ १२ ॥

इक्षुकोदण्डपुष्पेषुपाशाङ्कुशचतुर्भुजाम् ।
सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ॥ १३ ॥

सर्वतीर्थमयीं दिव्यां सर्वकामप्रपूरिणीम् ।
सर्वमन्त्रमयीं नित्यां सर्वागमविशारदाम् ॥ १४ ॥

सर्वक्षेत्रमयीं देवीं सर्वविद्यामयीं शिवाम् ।
सर्वयागमयीं विद्यां सर्वदेवस्वरूपिणीम् ॥ १५ ॥

सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम् ।
सर्वाम्नायमयीं देवीं सर्वायतनसेविताम् ॥ १६ ॥

सर्वानन्दमयीं ज्ञानगह्वरां संविदं पराम् ।
एवं ध्यायेत्परामम्बां सच्चिदानन्दरूपिणीम् ॥ १७ ॥

इति निजलीलाङ्गीकृतललितवपुषं विचिन्त्य ॥

## आवाहनम् ।

४ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः

महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातः एह्येहि परमेश्वरि ॥ १ ॥
एह्येहि देवदेवेशि त्रिपुरे देवपूजिते ।
परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धिदे ॥ २ ॥
देवेशि भक्तसुलभे सर्वावरणसंवृते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥ ३ ॥

बिन्दुपीठगतनिर्विशेषब्रह्मात्मकश्रीमत्कामेश्वराङ्क श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकामावाहयामि नमः ॥

नित्यादिकमणिमान्तं श्रीकामेश्वराङ्गोपवेशनं विना श्रीदेवीसमानाकृतिवेषभूषणायुधशक्तिचक्रमोघत्रयगुरुमण्डलं च वक्ष्यमाणेषु आवरणेषु निजस्वामिन्यभिमुखोपविष्टमवमृश्य ।

४ मूलम् आवाहिता भव ॥
४ मूलं संस्थापिता भव ॥
४ मूलं सन्निधापिता भव ॥
४ मूलं संनिरुद्धा भव ॥
४ मूलं संमुखी भव ॥
४ मूलम् अवकुण्ठिता भव ॥

इति मन्त्रैरावाहनादिषण्मुद्राः प्रदर्श्य, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत् । अथ हृदयादिषडङ्गमुद्राः बाणाद्यायुधमुद्राश्च तत्तन्मन्त्रपूर्वकं प्रदर्शयेत् ॥

## श्री देव्यङ्गपूजा ।

कुन्दैः कोकनदैः कदम्बकुसुमैः कोदण्डकैः कोकिलैः
कुब्जैर्कामिजकामराजकुटजैः कोदण्डकैः केतकैः ।
कल्हारैः करवीरकिंशुकैः श्रीकाञ्चनारैः शुभैः
कौसुम्भैः ककुभैः करोमि कुरवैः सर्वांगपूजां शिवे ॥

ॐ सुरासुरवन्दितचरणाम्बुजायै श्रीजगदम्बिकायै नमः
दिव्यपादौ पूजयामि ।

ॐ चम्पकावाटिचंक्रमणायै श्रीजयन्त्यै नमः
गुल्फौ पूजयामि ।

ॐ श्रीमहावेगवत्यै श्रीमहाकाल्यै नमः
जानुनी पूजयामि ।

ॐ सर्वसाम्राज्यदायिन्यै श्रीभद्रकाल्यै नमः
जङ्घे पूजयामि ।

ॐ सिंहारोहणोत्सुकायै श्रीमहादुर्गायै नमः
ऊरू पूजयामि ।

ॐ काञ्चीदामविभूषितायै श्रीकात्यायिन्यै नमः
कटिं पूजयामि ।

ॐ जगत्सृष्टिकारिण्यै लसद्वृत्तगंभीरनाभये
श्रीजगदीश्वर्यै नमः नाभिं पूजयामि ।

ॐ विश्वगर्भायै श्रीजगद्धात्र्यै नमः

उदरं पूजयामि ।

ॐ विष्णुवक्षस्थलस्थितायै श्रीमहालक्ष्म्यै नमः

हृदयं पूजयामि ।

ॐ सर्वलोकहितप्रदायै श्रीलोकमात्रे नमः

स्तनौ पूजयामि ।

ॐ अभयप्रदायै पद्महस्तायै श्रीपद्मावत्यै नमः

दक्षिणहस्तं पूजयामि ।

ॐ रत्नविभूषितायै शुकधारिण्यै श्रीलीलावत्यै नमः

वामहस्तं पूजयामि ।

ॐ श्रीमहिषासुरमर्दिन्यै अष्टादशभुजायै नमः

बाहून् पूजयामि ।

ॐ स्कन्दपूज्यायै नतोन्नतस्कन्धायै नमः

स्कन्धौ पूजयामि ।

ॐ सौभाग्यकारिण्यै कम्बुकण्ठ्यै नमः

कण्ठं पूजयामि ।

ॐ वज्राभरणयुक्तचिबुकायै नमः

चिबुकं पूजयामि ।

ॐ चारूहासिन्यै बिम्बोष्ठ्यै नमः
ओष्ठौ पूजयामि ।

ॐ पञ्चाशद्वर्णमातृकास्वरूपिण्यै श्रीवाग्भवेश्वर्यै नमः
जिह्वां पूजयामि ।

ॐ कुन्तकुड्मलदन्तशोभितदन्तायै नमः
दन्तान् पूजयामि ।

ॐ शरच्चन्द्रप्रतीकाशायै प्रत्यक्षपरमेश्वर्यै नमः
मुखं पूजयामि ।

ॐ गन्धतत्त्वात्मिकायै चम्पकनासिन्यै श्रीभूदेव्यै नमः
नासिकां पूजयामि ।

ॐ शब्दब्रह्मस्वरूपिण्यै श्रीगायत्रीपराम्बिकायै नमः
श्रोत्रौ पूजयामि ।

ॐ चन्द्रकान्तप्रदीप्तकपोलायै नमः
कपोलौ पूजयामि ।

ॐ रक्तान्तनेत्रायै श्रीकामाक्ष्यै नमः
नेत्रे पूजयामि ।

ॐ मायानाटकसूत्रधारिण्यै श्रीमीनाक्षीदेव्यै नमः
भ्रुवौ पूजयामि ।

ॐ रत्नतिलकाञ्चितफालायै लावण्यायै नमो नमः
ललाटं पूजयामि ।

ॐ महासौन्दर्यनिलयायै श्रीमहात्रिपुरसुन्दर्यै नमः
वक्त्रं पूजयामि ।

ॐ अखिलाण्डकोटिब्रह्माण्डनायिकायै श्रीसर्वेश्वर्यै नमः
शिरः पूजयामि ।

ॐ सर्वालङ्कारभूषितायै सर्वमङ्गलदायिन्यै नमः
सर्वाण्यङ्गानि पूजयामि ॥

चतुःषष्ट्युपचारपूजा ।

अथ श्रीपरदेवतायाः चतुष्षष्ट्युपचारानाचरेत् । तेष्वशक्तानां भावनया सामान्यार्घ्योदकात् किञ्चिदम्बाचरणाम्बुजेऽर्पणबुद्ध्या पात्रान्तरे निक्षिपेत् । पुष्पाक्षतान्वाऽर्पयेत् ॥

| | | | |
|---|---|---|---|
| ४ | श्रीललितायै | पाद्यं | कल्पयामि नमः |
| ४ | ” | आभरणावरोपणं | ” |
| ४ | ” | सुगन्धितैलाभ्यङ्गं | ” |
| ४ | ” | मज्जनशालाप्रवेशनं | ” |
| ४ | ” | मज्जनशालामणिपीठोपवेशनं | ” |
| ४ | ” | दिव्यस्नानीयोद्वर्तनं | ” |
| ४ | ” | उष्णोदकस्नानं | ” |

| | | | |
|---|---|---|---|
| ४ | श्रीललितायै | *कनककलशच्युतसकल-<br>तीर्थाभिषेकं | कल्पयामि नमः |
| ४ | ,, | धौतवस्त्रपरिमार्जनं | ,, |
| ४ | ,, | अरुणदुकूलपरिधानं | ,, |
| ४ | ,, | अरुणकुचोत्तरीयं | ,, |
| ४ | ,, | आलेपमण्टपप्रवेशनं | ,, |
| ४ | ,, | आलेपमण्टपमणिपीठोपवेशनं | ,, |
| ४ | ,, | चन्दनागरुकुंकुममृगमद-<br>कर्पूरकस्तूरीगोरोचनादि<br>दिव्यगन्धसर्वाङ्गीणविलेपनं | ,, |
| ४ | ,, | केशभारस्य कालागरुधूपं | ,, |
| ४ | ,, | मल्लिकामालतीजातीचम्पका-<br>शोकशतपत्रपूगकुहळीपुन्नाग-<br>कल्हारमुख्यसर्वर्तुकुसुममालाः | ,, |
| ४ | ,, | भूषणमण्टपप्रवेशनं | ,, |
| ४ | ,, | भूषणमण्टपमणिपीठोपवेशनं | ,, |
| ४ | ,, | नवमणिमकुटं | ,, |
| ४ | ,, | चन्द्रशकलं | ,, |
| ४ | ,, | सीमन्तसिन्दूरं | ,, |
| ४ | ,, | तिलकरत्नं | ,, |

* इह त्रिपुरा-देवी-भावना-वह्वृचोपनिषद्भिः श्रीसूक्त-दुर्गासूक्ताभ्यां च अभिषेकः कार्यः ॥

| | | | |
|---|---|---|---|
| ४ | ,, | कालाञ्जनं | कल्पयामि नमः |
| ४ | ,, | वाळीयुगलं | ,, |
| ४ | ,, | मणिकुण्डलयुगलं | ,, |
| ४ | ,, | नासाभरणं | ,, |
| ४ | ,, | अधरयावकं | ,, |
| ४ | ,, | प्रथमभूषणं (माङ्गल्यसूत्रं) | ,, |
| ४ | ,, | कनकचिन्ताकं | ,, |
| ४ | ,, | पदकं | ,, |
| ४ | ,, | महापदकं | ,, |
| ४ | ,, | मुक्तावलिं | ,, |
| ४ | ,, | एकावलिं | ,, |
| ४ | ,, | छन्नवीरं | ,, |
| ४ | ,, | केयूरयुगलचतुष्टयं | ,, |
| ४ | ,, | वलयावलिं | ,, |
| ४ | ,, | ऊर्मिकावलिं | ,, |
| ४ | ,, | काञ्चीदामं | ,, |
| ४ | ,, | कटिसूत्रं | ,, |
| ४ | ,, | सौभाग्याभरणं | ,, |
| ४ | ,, | पादकटकं | ,, |
| ४ | ,, | रत्ननूपुरं | ,, |
| ४ | ,, | पादाङ्गुलीयकं | ,, |

| | | | |
|---|---|---|---|
| ४ | ” | एककरे पाशं | कल्पयामि नमः |
| ४ | ” | अन्यकरेऽङ्कुशं | ” |
| ४ | ” | इतरकरे पुण्ड्रेक्षुचापं | ” |
| ४ | ” | अपरकरे पुष्पबाणान् | ” |
| ४ | ” | श्रीमन्माणिक्यपादुके | ” |
| ४ | ” | स्वसमानवेषाभिरावरणदेवताभिः सह महाचक्राधिरोहणं | ” |
| ४ | ” | कामेश्वराङ्कपर्यङ्कोपवेशनं | ” |
| ४ | ” | अमृतासवचषकं | ” |
| ४ | ” | आचमनीयं | ” |
| ४ | ” | कर्पूरवीटिकां | ” |
| ४ | ” | आनन्दोल्लासविलासहासं | ” |

अथ मङ्गळारार्तिकम् – कलधौतादिभाजने कुङ्कुमचन्दनादिलिखितस्याष्टषट्चतुर्दळाद्यन्यतमस्य कमलस्य चन्द्राकारचरुगोलकवत्यां चणकमुद्गजुषि वा कर्णिकायां दळेषु च पयःशर्करापिण्डीकृतयवगोधूमादिपिष्टोपादानकानि त्रिकोणशिरस्कडमवाकृतीनि चतुरङ्गुलोत्सेधानि घृतपाचितानि नवसप्तपञ्चान्यतमसंख्यानि दीपपात्राणि निधाय तेषु गोघृतं प्रत्येकं कर्षप्रमितमापूर्य कर्पूरगर्भितां वर्तिकां हृल्लेखया प्रज्वाल्य –

४ श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं – इति नवाक्षर्या रत्नेश्वरी-विद्यया अभिमन्त्र्य चक्रमुद्रां प्रदर्श्य मूलेनाभ्यर्च्य।

४ **जगद्ध्वनिमन्त्रमातः स्वाहा** - इति मन्त्रपूर्वकं गन्धाक्षतादिना घण्टां संपूज्य तां वादयन् जानुचुम्बितभूतलः तत्पात्रमामस्तकमुद्धृत्य।

४ **श्रीललितायै मङ्गळारार्तिकं कल्पयामि नमः।**
**समस्तचक्रचक्रेशीयुते देवि नवात्मिके।**
**आरार्तिकमिदं तुभ्यं गृहाण मम सिद्धये॥**

इति नववारं श्रीदेव्या आचूडं आचरणाब्जं परिभ्राम्य दक्षभागे स्थापयेत्।

| | | | |
|---|---|---|---|
| ४ | श्रीललितायै | छत्रं | कल्पयामि नमः। |
| ४ | " | चामरयुगलं | " |
| ४ | " | दर्पणं | " |
| ४ | " | तालवृन्तं | " |
| ४ | " | गन्धं | " |
| ४ | " | पुष्पं | " |
| ४ | " | धूपं | " |
| ४ | " | दीपं | " |

अथ नैवेद्यम् – देव्याः पुरतः स्वदक्षिणे चतुरश्रमण्डलं निर्माय तत्र आधारोपरि नैवेद्यं निधाय मूलेन प्रोक्ष्य **वम्** इति धेनुमुद्रया अमृतीकृत्य मूलेन त्रिवारमभिमन्त्र्य आपोशनं दत्वा।

४ **श्रीललितायै नैवेद्यं कल्पयामि नमः॥**

अथ श्रीललितायै पानीयमुत्तरापोशनं हस्तप्रक्षालनं गण्डूषमाचमनीयं ताम्बूलं च कल्पयेत्।

४ द्रां द्रीं क्लीं ब्लूं सः क्रों ह्स्ख्फ्रें ह्सौः ऐम्॥

इति सर्वसंक्षोभिण्यादिनवमुद्राः प्रदर्शयेत्।

षोडश्युपासकास्तु ह्स्रैं ह्स्क्लीं ह्स्रौः इति त्रिखण्डामपि प्रदर्शयेयुः॥

## श्रीमहागणपतितर्पणम्।

ततो मूलान्ते श्रीमहागणपतिश्रीपादुकां पूजयामीति वामकरतत्त्वमुद्रया सन्दष्टद्वितीयशकलगृहीतक्षीरबिन्दु दक्षकरोपात्तकुसुमयुगपत्प्रक्षेपेण देवं दशवारमुपतर्पयेत्। तत्त्वमुद्रा उत्तरत्रापि साधारणी।

श्रीं ह्रीं क्लीं मूलं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिश्री–पादुकां पूजयामि तर्पयामि नमः॥ इतिदशवारं संतर्पयेत्।

## षडङ्गपूजा।

ततो देवस्याङ्गे अग्नीशासुरवायुकोणेषु मौलौ दिक्षु च –

श्रीं ह्रीं क्लीं ओं गां हृदयाय नमः। हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः॥

३ श्रीं गीं शिरसे स्वाहा। शिरशक्ति श्री० पू० त० नमः॥

३ ह्रीं गूं शिखायै वषट्। शिखाशक्ति ,,

३ क्लीं गैं कवचाय हुम्। कवचशक्ति ,,

३ ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्ति श्री० पू० त० नमः ॥
३ गं गः अस्त्राय फट् । अस्त्रशक्ति ,,

## गुरुमण्डलार्चनम् ।

देवस्य पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्था क्रमेण गुर्वोघत्रयंयजेत् ।

यथा –

### दिव्यौघः १

श्रीं ह्रीं क्लीं विनायकसिद्धाचार्यश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ कवीश्वरसिद्धाचार्य ,,
३ विरूपाक्षसिद्धाचार्य ,,
३ विश्वसिद्धाचार्य ,,
३ ब्रह्मण्यसिद्धाचार्य ,,
३ निधीशसिद्धाचार्य ,,

### सिद्धौघः २

श्रीं ह्रीं क्लीं गजाधिराजसिद्धाचार्य श्रीपादुकां पू० त० नमः ॥
३ वरप्रदसिद्धाचार्य ,,

मानवौघः ३

श्रीं ह्रीं क्लीं विजयसिद्धाचार्य श्रीपादुकां पू० त० नमः॥

| | | |
|---|---|---|
| ३ | दुर्जयसिद्धाचार्य | ” |
| ३ | जयसिद्धाचार्य | ” |
| ३ | दुःखारिसिद्धाचार्य | ” |
| ३ | सुखावहसिद्धाचार्य | ” |
| ३ | परमात्मसिद्धाचार्य | ” |
| ३ | सर्वभूतात्मसिद्धाचार्य | ” |
| ३ | महानन्दसिद्धाचार्य | ” |
| ३ | फालचन्द्रसिद्धाचार्य | ” |
| ३ | सद्योजातसिद्धाचार्य | ” |
| ३ | बुद्धसिद्धाचार्य | ” |
| ३ | शूरसिद्धाचार्य | ” |

ततः परमेष्ठिगुरुमंत्रेण परमेष्ठिगुरुं, परमगुरुमंत्रेण परमगुरुं, स्वगुरुमंत्रेण स्वगुरुं च यजेत्॥

आवरणदेवताध्यानम्।

त्रिकोणवाह्ये पूर्वादिचतुर्दिक्षु समर्चयेत्
अग्रस्थबिल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत्
पद्मायुधधरा पद्मा शंखचक्रधरो हरिः

दक्षिणे वटवृक्षाधः गौरीं गौरीपतिं यजेत्
पाशांकुशधरा गौरी टङ्कशूलधरो हरः
पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत्
रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः
सौम्ये प्रियंगुवृक्षाधः महापोत्रिणमर्चयेत्
शुकव्रीह्यग्रहस्ताभूर्गदाचक्रधरःपतिः
षट्कोणेषुच संपूज्याः आमोदाद्याः प्रियान्विताः
आमोदं सिद्धिसहितमग्रकोणे प्रपूजयेत्
समृद्ध्या युक्तमभ्यर्च्य प्रमोदं वह्निकोणके
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत्
दुर्मुखं मदनावत्या यजेद्वरुणकोणके
विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत्
वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत्
पाशांकुशाभयाऽभीष्टवारिणोऽरुणविग्रहाः
गण्डभित्तिगलद्दानपूरधौतमुखांबुजाः
विघ्नास्तत्प्रमदास्सर्वाः मदाघूर्णितलोचनाः
एकहस्तधृताम्भोजाः इतरालिङ्गितप्रियाः
षट्कोणपार्श्वयोः पूज्यौ शंखपद्मनिधी क्रमात्
निजप्रियाभ्यां सहितौ सर्वाभरणभूषितौ
केसरेष्वंगपूजा स्यात् ब्राह्म्याद्याः पत्रमध्यगाः
बहिर्लोकेश्वराः पूज्याः वज्रादीनि यथाक्रमम्

३ ॠं वैष्णवी-श्रीपादुकां पूजयामि नमः ॥
३ ॢं वाराही ”
३ ऐं माहेन्द्री ”
३ औं चामुण्डा ”
३ अः महालक्ष्मी ”

पञ्चमावरणम् ।

अथ चतुरश्रस्य रेखायां प्रागाद्यासु अष्टसु दिक्षु क्रमेण –

श्रीं ह्रीं क्लीं लां इन्द्राय वज्रहस्ताय सुराधिपतये
ऐरावतवाहनाय सपरिवाराय नमः ॥
३ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये
अजवाहनाय सपरिवाराय नमः ॥
३ टां यमाय दण्डहस्ताय प्रेताधिपतये
महिषवाहनाय सपरिवाराय नमः ॥
३ क्षां निॠतये खड्गहस्ताय रक्षोऽधिपतये
नरवाहनाय सपरिवाराय नमः ॥
३ वां वरुणाय पाशहस्ताय जलाधिपतये
मकरवाहनाय सपरिवाराय नमः ॥
३ यां वायवे ध्वजहस्ताय प्राणाधिपतये
रुरुवाहनाय सपरिवाराय नमः ॥

३ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः ॥

३ हां ईशानाय त्रिशूलहस्ताय विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः ॥

श्रीचण्डी-गुरुमण्डलार्चनम् ।

मूलेन दशवारम् तर्पयित्वा षडङ्गार्चनं कुर्यात् –

दिव्यौघः

ऐं ह्रीं क्लीं महादेव्यम्बा-श्रीपादुकां पूजयामि नमः ॥

३ महानन्दनाथ ,,

३ त्रिपुराम्बा ,,

३ भैरवानन्दनाथ ,,

सिद्धौघः

श्रीं ह्रीं क्लीं ब्रह्मानन्दनाथ-श्रीपादुकां पूजयामि नमः ॥

३ पूर्णदेवानन्दनाथ ,,

३ चलचित्तानन्दनाथ ,,

३ स्मरदीपानन्दनाथ ,,

३ मायाम्बा ,,

३ मायावत्यम्बा ,,

## मानवौघः

श्रीं ह्रीं क्लीं विमलानन्दनाथ-श्रीपादुकां पूजयामि नमः ॥

| | | |
|---|---|---|
| ३ | कुशलानन्दनाथ | ” |
| ३ | भीमसेनानन्दनाथ | ” |
| ३ | सुधाकरानन्दनाथ | ” |
| ३ | मीनानन्दनाथ | ” |
| ३ | गोरक्षानन्दनाथ | ” |
| ३ | भोजदेवानन्दनाथ | ” |
| ३ | प्राजापत्यानन्दनाथ | ” |
| ३ | मूलदेवानन्दनाथ | ” |
| ३ | रतिदेवानन्दनाथ | ” |
| ३ | विघ्नदेवानन्दनाथ | ” |
| ३ | हुताशनानन्दनाथ | ” |
| ३ | समयानन्दनाथ | ” |
| ३ | संतोषानन्दनाथ | ” |

## श्रीचण्डी-नवावरणार्चनम्।

ऐं ह्रीं क्लीं इति पल्लवमन्त्रं सर्वत्र योजनीयम्।

### प्रथमावरणम्।

तत्र यन्त्रषट्कोणस्थपश्चिमकोणे महालक्ष्मीपृष्ठभागे
सरस्वती ब्रह्माभ्यां नमः। सरस्वतीब्रह्मा-श्रीपा० पू० नमः॥
नैर्ऋत्यकोणे गौरीरुद्राभ्यां नमः। गौरीरुद्र ,,
वायुकोणे लक्ष्मीहृषीकेशाभ्यां नमः। लक्ष्मीहृषीकेश ,,
पूर्वकोणे अष्टदशभुजायै नमः। अष्टदशभुजा ,,
अग्निकोणे दशाननायै नमः। दशानना ,,
ईशानकोणे अष्टभुजायै नमः। अष्टभुजा श्रीपा० पू० नमः॥

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥

श्रीचण्डिकापरमेश्वरी प्रीयताम्॥

### द्वितीयावरणम्।

पुनः षट्कोणेषु प्रागादिषु
ओं नं नन्दजायै नमः। नन्दजा-श्रीपादुकां पूजयामि नमः॥
ओं रं रक्तदंतिकायै नमः। रक्तदंतिका ,,
ओं शां शाकंभर्यै नमः। शाकंभरी ,,
ओं दुं दुर्गायै नमः। दुर्गा ,,

ओं भीं भीमायै नमः । भीमा-श्रीपादुकां पूजयामि नमः ॥
ओं भ्रां भ्रामर्यै नमः । भ्रामरी ”

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

श्रीचण्डिकापरमेश्वरी प्रीयताम् ॥

तृतीयावरणम् ।

षट्कोणाद्बहिः आग्नेयादिचतुर्भागेषु

ओं जं जयायै नमः । जया-श्रीपादुकां पूजयामि नमः ॥
ओं विं विजयायै नमः । विजया ”
ओं जं जयन्त्यै नमः । जयन्ती ”
ओं अं अपराजितायै नमः । अपराजिता ”

षट्कोणपार्श्वयोः दक्षिणभागे

ओं सिंहाय नमः । सिंह-श्रीपादुकां पूजयामि नमः ॥
उत्तरभागे-ओं महिषाय नमः । महिष ”

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

श्रीचण्डिकापरमेश्वरी प्रीयताम् ॥

## चतुर्थावरणम्।

अष्टपत्रेषु प्रागादिषु

ओं ब्रां ब्राह्म्यै नमः। ब्राह्मी-श्रीपादुकां पूजयामि नमः॥
ओं मां माहेश्वर्यै नमः। माहेश्वरी "
ओं कौं कौमार्यै नमः। कौमारी "
ओं वैं वैष्णव्यै नमः। वैष्णवी "
ओं वां वाराह्यै नमः। वाराही "
ओं नां नारसिंह्यै नमः। नारसिंही "
ओं ऐं ऐन्द्र्यै नमः। ऐन्द्री "
ओं चां चामुंडायै नमः। चामुंडा "

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्॥

श्रीचण्डिकापरमेश्वरी प्रीयताम्॥

## पंचमावरणम् ।

पुनः अष्टदलेषु प्रागादिषु

ओं अं असितांगभैरवाय नमः । असितांगभैरव-श्री० पू० नमः
ओं रुं रुरुभैरवाय नमः । रुरुभैरव ,,
ओं चं चण्डभैरवाय नमः । चण्डभैरव ,,
ओं क्रों क्रोधभैरवाय नमः । क्रोधभैरव ,,
ओं उं उन्मत्तभैरवाय नमः । उन्मत्तभैरव ,,
ओं कं कपालभैरवाय नमः । कपालभैरव ,,
ओं भीं भीषणभैरवाय नमः । भीषणभैरव ,,
ओं सं संहारभैरवाय नमः । संहारभैरव ,,

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ।
भक्त्या समर्पये तुभ्यं पंचमावरणार्चनम् ॥

श्रीचण्डिकापरमेश्वरी प्रीयताम् ॥

## षष्टावरणम्।

चतुर्विंशतिदलेषु प्रागादिक्रमेण

ओं विष्णुमायायै नमः। विष्णुमाया-श्रीपादुकां पूजयामि नमः
ओं चेतनायै नमः। चेतना ,,
ओं बुद्ध्यै नमः। बुद्धि ,,
ओं निद्रायै नमः। निद्रा ,,
ओं क्षुधायै नमः। क्षुधा ,,
ओं छायायै नमः। छाया ,,
ओं शक्त्यै नमः। शक्ति ,,
ओं तृष्णायै नमः। तृष्णा ,,
ओं क्षान्त्यै नमः। क्षान्ति ,,
ओं जात्यै नमः। जाति ,,
ओं लज्जायै नमः। लज्जा ,,
ओं शान्त्यै नमः। शान्ति ,,
ओं श्रद्धायै नमः। श्रद्धा ,,
ओं कान्त्यै नमः। कान्ति ,,
ओं लक्ष्म्यै नमः। लक्ष्मी ,,
ओं धृत्यै नमः। धृति ,,
ओं वृत्त्यै नमः। वृत्ति ,,

ओं स्मृत्यै नमः। स्मृति-श्रीपादुकां पूजयामि नमः
ओं दयायै नमः। दया ”
ओं तुष्ट्यै नमः। तुष्टि ”
ओं पुष्ट्यै नमः। पुष्टि ”
ओं मात्रे नमः। मातृ ”
ओं भ्रान्त्यै नमः। भ्रान्ति ”
ओं चित्यै नमः। चिति ”

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्।
भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम्॥

श्रीचण्डिकापरमेश्वरी प्रीयताम्॥

सप्तमावरणम्।

भूगृहख्युदयप्रागादिषु

ओं लं इन्द्राय नमः। इन्द्र-श्रीपादुकां पूजयामि नमः
ओं रं अग्नये नमः। अग्नि ”
ओं मं यमाय नमः। यम ”
ओं क्षं निर्ऋतये नमः। निर्ऋति ”
ओं वं वरुणाय नमः। वरुण ”
ओं यं वायवे नमः। वायु ”

ओं सं सोमाय नमः। सोम-श्रीपादुकां पूजयामि नमः

ओं हं रुद्राय नमः। रुद्र ”

ईशानीप्रागन्तराले

ओं आं ब्रह्मणे नमः। ब्रह्मा श्रीपादुकां पूजयामि नमः

वरुणनिर्ऋत्यंतराले

ओं ह्रीं शेषाय नमः। शेष-श्रीपादुकां पूजयामि नमः

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्॥

श्रीचण्डिकापरमेश्वरी प्रीयताम्॥

अष्टमावरणम्।

पुनस्तेनैव क्रमेण

ओं वं वज्राय नमः। वज्र-श्रीपादुकां पूजयामि नमः

ओं शं शक्त्यै नमः। शक्ति ”

ओं दं दण्डाय नमः। दण्ड ”

ओं खं खड्गाय नमः। खड्ग ”

ओं पां पाशाय नमः। पाश ”

ओं अं अंकुशाय नमः। अंकुश ”

ओं गं गदायै नमः। गदा-श्रीपादुकां पूजयामि नमः
ओं त्रिं त्रिशूलाय नमः। त्रिशूल ,,
ओं पं पद्माय नमः। पद्म ,,
ओं चं चक्राय नमः। चक्र ,,

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्।
भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम्॥

श्रीचण्डिकापरमेश्वरी प्रीयताम्॥

नवमावरणम्।

भूगृहाद्बहिः प्रागादिदिक्षु

ओं गं गणपतये नमः। गणपति-श्रीपादुकां पूजयामि नमः
ओं क्षें क्षेत्रपालाय नमः। क्षेत्रपाल ,,
ओं बं बटुकाय नमः। बटुक ,,
ओं यों योगिनीभ्यो नमः। योगिनी ,,

मूलेन त्रिवारं तर्पयित्वा

दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम्॥

श्रीचण्डिकापरमेश्वरी प्रीयताम्॥

## ॥ श्रीसूक्तम् ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ ३ ॥

कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ४ ॥

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥

आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

मनसः काममाकूतिं वाचस्सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशाः ॥ १० ॥

कर्दमेन प्रजाभूता मयि संभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥

आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयां पुरुषानहम् ॥ १५ ॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥

पद्मानने पद्मऊरू पद्माक्षी पद्मसंभवे ।
तन्मे भजसि पद्माक्षी येन सौख्यं लभाम्यहम् ॥

अश्वदायी गोदायी धनदायी महाधने ।
धनं मे जुषतां देवि सर्वकामांश्च देहि मे ॥

पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥

पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम् ।
प्रजानां भवसी माता आयुष्मन्तं करोतु मे ॥

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणं धनमस्तु ते ॥

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥

सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।
लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥

महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥

श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।
धान्यं धनं पशुं बहुपुत्रलाभं शतसंवथ्सरं दीर्घमायुः ॥

॥ इति श्रीसूक्तम् ॥

## ॥ दुर्गासूक्तम् ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः ॥ २ ॥

अग्ने त्वं पारयानव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ॥ ३ ॥

विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरितातिपर्षि ।
अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ ४ ॥

पृतनाजितँ सहमानमुग्रमग्निꣳ हुवेम परमाथ्सधस्थात् ।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरितात्यग्निः ॥ ५ ॥

प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।
स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व ॥ ६ ॥

गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्रविष्णोरनुसंचरेम ।
नाकस्य पृष्ठमभिसंवसानो वैष्णवीं लोक इह मादयन्ताम् ॥ ७ ॥

॥ इति दुर्गासूक्तम् ॥

# ॥ त्रिपुरोपनिषत् ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्त्संदधाम्यृतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारमवतु वक्तारम् ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ तिस्रः पुरस्त्रिपथा विश्वचर्षणी अत्राकथा अक्षरा संनिविष्टा ।
अधिष्ठायैनामजरा पुराणी महत्तरा महिमा देवतानाम् ॥ १ ॥

नवयोनीर्नव चक्राणि दीधिरे नवैव योगा नव योगिनीश्च ।
नवानां चक्रे अधिनाथाः स्योना नव मुद्रा नव भद्रा महीनाम् ॥२ ॥

एका सा आसीत्प्रथमा सा नवासीदासोनविंशदासोनत्रिंशत् ।
चत्वारिंशदथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु ॥ ३ ॥

ऊर्ध्वज्वलज्ज्वलनज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत् ।
आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला मण्डयन्ति ॥ ४ ॥

तिस्रश्च रेखाः सदनानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाशाः ।
एतत्पुरं पूरकं पूरकाणामत्र प्रथेते मदनो मदन्या ॥ ५ ॥

मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी शुद्धमत्ता* ।
लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥६ ॥

इमां विज्ञाय सुधया मदन्ति परिस्रुता तर्पयन्तः स्वपीठम् ।
नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ ७ ॥

---

* सिद्धिमत्तेत्याथर्वणः पाठः ।

कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या ॥ ८ ॥

षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिकमादेशयन्तः ।
कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥ ९ ॥

त्रिविष्टपं त्रिमुखं विश्वमातुर्नव रेखाः स्वरमध्यं तदीळे ।
बृहत्तिथीर्दश पञ्चादि नित्या सा षोडशी पुरमध्यं बिभर्ति ॥ १० ॥

द्वा मण्डला द्वा स्तना बिम्बमेकं मुखं चाधस्त्रीणि गुहा सदनानि ।
कामीं कलां काम्यरूपां विदित्वा नरो जायते कामरूपश्च काम्यः ॥ ११ ॥

परिस्रुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि ।
निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥ १२ ॥

सृण्येव सितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान् ।
इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥ १३ ॥

भगः शक्तिर्भगवान्काम ईश उभा दाताराविह सौभगानाम् ।
समप्रधानौ समसत्त्वौ समोतयोः समशक्तिरजरा विश्वयोनिः ॥ १४ ॥

परिस्रुता हविषा पावितेन प्र संकोचे गलिते वै मनस्तः ।
सर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ १५ ॥

इयं महोपनिषत्त्रिपुराया यामक्षरं परमे गीर्भिरीट्टे ।
एषर्ग्यजुः परमेतच्च सामेवायमथर्वेयमन्या च विद्योम् ॥ १६ ॥

एवं वेदेत्युपनिषत् ॥

ॐ वाङ्मे मनसीति शान्तिः ॥ हरिः ओं तत्सत् ॥

॥ इति त्रिपुरोपनिषत् ॥

# देव्युपनिषत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ सर्वे वै देवा देवीमुपतस्थुः। कासि त्वं महादेवि ॥ १ ॥ साब्रवीदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च। अहमानन्दानानन्दाः। विज्ञानाविज्ञाने अहम्। ब्रह्माब्रह्मणी वेदितव्ये। इत्याहाथर्वणी श्रुतिः ॥ २ ॥ अहं पञ्च-भूतान्यपञ्चभूतानि। अहमखिलं जगत्। वेदोऽहमवेदोऽहम्। विद्याहमविद्याहम्। अजाहमनजाहम्। अधश्चोर्ध्वं च तिर्यक्चा-हम् ॥ ३ ॥ अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः। अहं मित्रावरुणावुभौ बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ ॥ ४ ॥ अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम्। विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ५ ॥ अहं दधामि द्रविणं हविष्मते सुप्राव्ये ३ ये यजमानाय सुन्वते। अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य मूर्धन् ॥ ६ ॥ मम योनिरप्स्वन्तः समुद्रे। य एवं वेद स देवीपदमाप्नोति ॥ ७ ॥ ते देवा अब्रुवन्। नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ ८ ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशय ते तमः ॥ ९ ॥ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ १० ॥ कालरात्रिं

ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्। सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्॥ ११॥ महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि। तन्नो देवी प्रचोदयात्॥ १२॥ अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः॥ १३॥ कामो योनिः कामकला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्योम्॥ १४॥ एषात्मशक्तिः। एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या॥ १५॥ य एवं वेद स शोकं तरति॥ १६॥ नमस्ते अस्तु भगवति भवति मातरस्मान्पातु सर्वतः॥ १७॥ सैषाष्टौ वसवः। सैषैकादश रुद्राः। सैषा द्वादशादित्याः। सैषा विश्वेदेवाः सोमपा असोमपाश्च। सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः। सैषा सत्त्वरजस्तमांसि सैषा प्रजापतीन्द्रमनवः। सैषा ग्रहनक्षत्रज्योतींषि कलाकाष्ठादिकालरूपिणी। तामहं प्रणौमि नित्यम्॥ १८॥ तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम्। अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम्॥ १९॥ वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम्। अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्॥ २०॥ एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः। ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः॥ २१॥ वाङ्मया ब्रह्म-भूस्तस्मात्षष्ठं वक्त्रसमन्वितम्। सूर्यो वामश्रोत्रबिन्दुःसंयुताष्ट-तृतीयकः॥ २२॥ नारायणेन संयुक्तो वायुश्चाधरसंयुतः। विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः॥ २३॥ हृत्पुण्डरीकमध्य-स्थां प्रातःसूर्यसमप्रभाम्। पाशाङ्कुशधरां सौम्यां वरदाभयहस्त-काम्। त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे॥ २४॥ नमामि त्वामहं देवीं महाभयविनाशिनीम्। महादुर्गप्रशमनीं महाकारुण्य-रूपिणीम्॥ २५॥ यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मा-

दुच्यतेऽज्ञेया। यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता। यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या। यस्या जननं नोपलभ्यते तस्मादुच्यतेऽजा। एकैव सर्वत्र वर्तते तस्मादुच्यते एका। एकैव विश्वरूपिणी तस्मादुच्यते नैका। अत एवोच्यतेऽज्ञेयानन्तालक्ष्याजैका नैकेति॥ २६॥ मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी। ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी॥ २७॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता। (दुर्गात्संत्रायते यस्माद्देवी दुर्गेति कथ्यते। प्रपद्ये शरणं देवीं दुंदुर्गे दुरितं हर॥) तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम्। नमामि भवभीतोऽहं संसारार्णवतारिणीम्॥ २८॥ इदमथर्वशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमवाप्नोति। इदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति शतलक्षं प्रजप्त्वापि सोऽर्चासिद्धिं न विन्दति॥ २९॥ शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः॥ ३०॥ दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते। महादुर्गाणि तरति महादेव्याः प्रसादतः॥ ३१॥ सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायं प्रातः प्रयुञ्जानोऽपापो भवति। निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति। प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति। भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति। य एवं वेदेत्युपनिषत्॥ ३२॥

ॐ भद्रं कर्णेभिरिति शान्तिः॥ हरिः ओं तत्सत्॥

॥ इति देव्युपनिषत्॥

# भावनोपनिषत् ॥

ओं भद्रं कर्णेभिरिति शान्तिः ॥

हरिः ॐ। आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्ड-मण्डलं स्वप्रकाशं ध्यायेत्। श्रीगुरुः सर्वकारणभूता शक्तिः॥ १॥ तेन नवरन्ध्ररूपो देहः॥ २॥ नवशक्तिरूपं श्रीचक्रम्॥ ३॥ वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता॥ ४॥ पुरुषार्थाः सागराः॥ ५॥ देहो नवरत्नद्वीपः॥ ६॥ त्वगादिसप्तधातुरोम-संयुक्तः॥ ७॥ संकल्पाः कल्पतरवस्तेजः कल्पकोद्यानम्॥ ८॥ रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः॥ ९॥ ज्ञानमर्घ्यं ज्ञेयं हविर्ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम्॥ १०॥ नियतिः श्रृङ्गारादयो रसा अणिमादयः॥ ११॥ कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्ट शक्तयः॥ १२॥ आधारनवकं मुद्राशक्तयः॥ १३॥ पृथिव्य-प्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडश-शक्तयः॥ १४॥ वचनादान-गमनविसर्गानन्दहानोपादानोपेक्षाख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ॥ १५॥ अलम्बुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः॥ १६॥ प्राणापान-व्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दश वायवः सर्व-सिद्धिप्रदादिबहिर्दशारदेवताः॥ १७॥ एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति॥१८॥ क्षारक उद्गारकः क्षोभको जृम्भको मोहक

इति नागप्राधान्येन पञ्चविधास्ते मनुष्याणां देहगा भक्ष्यभोज्य-चोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति॥ १९॥ एता दश वह्निकलाः सर्वज्ञाद्या अन्तर्दशारदेवताः॥ २०॥ शीतोष्णसुख-दुःखेच्छाः सत्त्वं रजस्तमो वशिन्यादिशक्तयोऽष्टौ॥ २१॥ शब्दा-दितन्मात्राः पञ्च पुष्पबाणाः॥ २२॥ मन इक्षुधनुः॥ २३॥ रागः पाशः॥ २४॥ द्वेषोऽङ्कुशः॥ २५॥ अव्यक्तमहदहङ्काराः कामे-श्वरीवज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणगा देवताः॥ २६॥ निरुपा-धिकसंविदेव कामेश्वरः॥ २७॥ सदानन्दपूर्णः स्वात्मैव परदेवता ललिता॥ २८॥ लौहित्यमेतस्य सर्वस्य विमर्शः॥ २९॥ अनन्य-चित्तत्वेन च सिद्धिः॥ ३०॥ भावनायाः क्रिया उपचारः॥ ३१॥ अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपासितव्यमिति विकल्पा-नामात्मनि विलापनं होमः॥ ३२॥ भावनाविषयाणामभेदभावना तर्पणम्॥ ३३॥ पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम्॥ ३४॥ एवं मुहूर्तत्रितयं मुहूर्तद्वितयं मुहूर्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते॥ ३५॥ कादिम-तेनान्तश्चक्रभावनाः प्रतिपादिताः॥ ३६॥ य एवं वेद सोऽथर्व-शिरोऽधीते॥३७॥ इत्युपनिषत्॥

ओं भद्रं कर्णेभिरिति शान्तिः॥ हरिः ओं तत्सत्॥

॥ इति भावनोपनिषत्॥

# बह्वृचोपनिषत् ॥

ओं वाङ्मे मनसीति शान्तिः ॥

हरिः ॐ। देवी ह्येकाग्र एवासीत्। सैव जगदण्डमसृजत्। कामकलेति विज्ञायते। शृङ्गारकलेति विज्ञायते। तस्या एव ब्रह्मा अजीजनत्। विष्णुरजीजनत्। रुद्रोऽजीजनत्। सर्वे मरुद्गणा अजीजनन्। गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्ताद-जीजनन्। भोग्यमजीजनत्। सर्वमजीजनत्। सर्वं शाक्तम-जीजनत्। अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किंचैतत्प्राणि स्था-वरजङ्गमं मनुष्यमजीजनत् ॥

सैषा परा शक्तिः। सैषा शांभवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा। रहस्यमोमों वाचि प्रतिष्ठा। सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकाल-वस्त्वन्तरासङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः। सैवात्मा ततोऽन्यदसत्यमनात्मा। अत एषा ब्रह्मसंवित्तिर्भावाभावकला-विनिर्मुक्ता चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः सच्चिदानन्दलहरी महा-त्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति। यदस्ति सन्मात्रम्। यद्विभाति चिन्मात्रम्। यत्प्रियमानन्दं तदेतत्पूर्वाकारा महात्रिपुरसुन्दरी। त्वं चाहं च सर्वं विश्वं सर्वदेवता। इतरत्सर्वं महात्रिपुरसुन्दरी। सत्यमेकं ललिताख्यं वस्तु तदद्वितीयम-खण्डार्थं परं ब्रह्म। पञ्चरूपपरित्यागादस्वरूपप्रहाणतः। अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति। प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते। तत्त्वमसीत्येव संभाष्यते। अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा योऽहमस्मीति वा सोहमस्मीति वा

योऽसौ सोऽहमस्मीति वा या भाष्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री गायत्री सरस्वती ब्रह्मानन्दकलेति। ऋचो अक्षरे परमे व्योमन्। यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति। य इत्तद्विदुस्त इमे समासते॥ इत्युपनिषत्॥ ओं वाङ्मे मनसीति शान्तिः॥ हरिः ओं तत्सत्॥

॥ इति बह्वृचोपनिषत्॥

# शान्तिपञ्चकम् ॥

शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्॥ ओं शान्तिः शान्तिः शान्तिः॥

शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्॥ ओं शान्तिः शान्तिः शान्तिः॥

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ओं शान्तिः शान्तिः शान्तिः॥

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासँ शिवामदस्ताञ्जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत्। शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती। भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि

मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ओं शान्तिः शान्तिः शान्तिः ॥

तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

॥ इति शान्तिपञ्चकम् ॥

# ॥ श्रीललितासहस्रनामावलिः ॥

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥

ओं - ऐं - ह्रीं - श्रीं

ओं श्रीमात्रे नमः ओं
श्रीमहाराज्ञ्यै
श्रीमत्सिंहासनेश्वर्यै
चिदग्निकुण्डसंभूतायै
देवकार्यसमुद्यतायै
उद्यद्भानुसहस्राभायै
चतुर्बाहुसमन्वितायै
रागस्वरूपपाशाढ्यायै
क्रोधाकाराङ्कुशोज्ज्वलायै
मनोरूपेक्षुकोदण्डायै १०
पञ्चतन्मात्रसायकायै
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डलायै
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै
कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डितायै
अष्टमीचन्द्रविभ्राजदलिकस्थलशोभितायै
मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै
वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै

ओं नवचम्पकपुष्पाभनासादण्डविराजितायै नमः ओं
ताराकान्तितिरस्कारिनासाभरणभासुरायै
कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरायै
ताटङ्कयुगलीभूततपनोडुपमण्डलायै
पद्मरागशिलादर्शपरिभाविकपोलभुवे
नवविद्रुमबिम्बश्रीन्यक्कारिदशनच्छदायै
शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वलायै
कर्पूरवीटिकामोदसमाकर्षिदिगन्तरायै
निजसंलापमाधुर्यविनिर्भर्त्सितकच्छप्यै
मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै
अनाकलितसादृश्यचुबुकश्रीविराजितायै
कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरायै
कनकाङ्गदकेयूरकमनीयभुजान्वितायै
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्वितायै
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तन्यै
नाभ्यालवालरोमालिलताफलकुचद्वय्यै
लक्ष्यरोमलताधारतासमुन्नेयमध्यमायै
स्तनभारदलन्मध्यपट्टबन्धवलित्रयायै
अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतट्यै
रत्नकिङ्किणिकारम्यरशनादामभूषितायै
कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै
माणिक्यमकुटाकारजानुद्वयविराजितायै
इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकायै
गूढगुल्फायै
कूर्मपृष्ठजयिष्णुप्रपदान्वितायै
नखदीधितिसंछन्ननमज्जनतमोगुणायै

ओं पदद्वयप्रभाजालपराकृतसरोरुहायै नमः ओं
शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजायै
मरालीमन्दगमनायै
महालावण्यशेवधये
सर्वारुणायै
अनवद्याङ्ग्यै ५०
सर्वाभरणभूषितायै
शिवकामेश्वराङ्कस्थायै
शिवायै
स्वाधीनवल्लभायै
सुमेरुमध्यशृङ्गस्थायै
श्रीमन्नगरनायिकायै
चिन्तामणिगृहान्तस्थायै
पञ्चब्रह्मासनस्थितायै
महापद्माटवीसंस्थायै
कदम्बवनवासिन्यै ६०
सुधासागरमध्यस्थायै
कामाक्ष्यै
कामदायिन्यै
देवर्षिगणसंघातस्तूयमानात्मवैभवायै
भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै
सम्पत्करीसमारूढसिन्धुरव्रजसेवितायै
अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृतायै
चक्रराजरथारूढसर्वायुधपरिष्कृतायै
गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै
किरिचक्ररथारूढदण्डनाथापुरस्कृतायै ७०

ओं ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगायै नमः ओं
भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै
नित्यापराक्रमाटोपनिरीक्षणसमुत्सुकायै
भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दितायै
मन्त्रिण्यम्बाविरचितविषङ्गवधतोषितायै
विशुक्रप्राणहरणवाराहीवीर्यनन्दितायै
कामेश्वरमुखालोककल्पितश्रीगणेश्वरायै
महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षितायै
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिण्यै
कराङ्गुलिनखोत्पन्ननारायणदशाकृत्यै ८०
महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै
कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यकायै
ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवायै
हरनेत्राग्निसंदग्धकामसंजीवनौषध्यै
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै
कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिण्यै
शक्तिकूटैकतापन्नकट्यधोभागधारिण्यै

ओं मूलमन्त्रात्मिकायै नमः ओं
मूलकूटत्रयकलेवरायै
कुलामृतैकरसिकायै ९०
कुलसंकेतपालिन्यै
कुलाङ्गनायै
कुलान्तस्थायै
कौलिन्यै
कुलयोगिन्यै
अकुळायै

ओं समयान्तस्थायै नमः ओं
समयाचारतत्परायै
मूलाधारैकनिलयायै
ब्रह्मग्रन्थिविभेदिन्यै १००
मणिपूरान्तरुदितायै
विष्णुग्रन्थिविभेदिन्यै
आज्ञाचक्रान्तरालस्थायै
रुद्रग्रन्थिविभेदिन्यै
सहस्राराम्बुजारूढायै

ओं सुधासाराभिवर्षिण्यै नमः ओं
तटिल्लतासमरुच्यै
षट्चक्रोपरिसंस्थितायै
महासक्त्यै
कुण्डलिन्यै ११०
बिसतन्तुतनीयस्यै
भवान्यै
भावनागम्यायै
भवारण्यकुठारिकायै
भद्रप्रियायै
भद्रमूर्तये
भक्तसौभाग्यदायिन्यै
भक्तिप्रियायै
भक्तिगम्यायै
भक्तिवश्यायै १२०
भयापहायै
शांभव्यै
शारदाराध्यायै
शर्वाण्यै
शर्मदायिन्यै
शांकर्यै
श्रीकर्यै
साध्व्यै
शरच्चन्द्रनिभाननायै
शान्तोदर्यै १३०
शान्तिमत्यै

ओं निराधारायै नमः ओं
निरञ्जनायै
निर्लेपायै
निर्मलायै
नित्यायै
निराकारायै
निराकुलायै
निर्गुणायै
निष्कलायै १४०
शान्तायै
निष्कामायै
निरुपप्लवायै
नित्यमुक्तायै
निर्विकारायै
निष्प्रपञ्चायै
निराश्रयायै
नित्यशुद्धायै
नित्यबुद्धायै
निरवद्यायै १५०
निरन्तरायै
निष्कारणायै
निष्कलङ्कायै
निरुपाधये
निरीश्वरायै
नीरागायै
रागमथन्यै

ओं निर्मदायै नमः ओं
मदनाशिन्यै
निश्चिन्तायै १६०
निरहंकारायै
निर्मोहायै
मोहनाशिन्यै
निर्ममायै
ममताहन्त्र्यै
निष्पापायै
पापनाशिन्यै
निष्क्रोधायै
क्रोधशमन्यै
निर्लोभायै १७०
लोभनाशिन्यै
निःसंशयायै
संशयघ्न्यै
निर्भवायै
भवनाशिन्यै
निर्विकल्पायै
निराबाधायै
निर्भेदायै
भेदनाशिन्यै
निर्नाशायै १८०
मृत्युमथन्यै
निष्क्रियायै
निष्परिग्रहायै

ओं निस्तुलायै नमः ओं
नीलचिकुरायै
निरपायायै
नित्यायै
दुर्लभायै
दुर्गमायै
दुर्गायै १९०
दुःखहन्त्र्यै
सुखप्रदायै
दुष्टदूरायै
दुराचारशमन्यै
दोषवर्जितायै
सर्वज्ञायै
सान्द्रकरुणायै
समानाधिकवर्जितायै
सर्वशक्तिमय्यै
सर्वमङ्गलायै २००
सद्गतिप्रदायै
सर्वेश्वर्यै
सर्वमय्यै
सर्वमन्त्रस्वरूपिण्यै
सर्वयन्त्रात्मिकायै
सर्वतन्त्ररूपायै
मनोन्मन्यै
माहेश्वर्यै
महादेव्यै

ओं महालक्ष्म्यै नमः ओं २१०
मृडप्रियायै
महारूपायै
महापूज्यायै
महापातकनाशिन्यै
महामायायै
महाशक्त्यै
महासत्त्वायै
महारत्यै
महाभोगायै
महैश्वर्यायै २२०
महावीर्यायै
महाबलायै
महाबुद्ध्यै
महासिद्ध्यै
महायोगीश्वरेश्वर्यै
महातन्त्रायै
महामन्त्रायै
महायन्त्रायै
महासनायै
महायागक्रमाराध्यायै २३०
महाभैरवपूजितायै
महेश्वरमहाकल्पमहा-
ताण्डवसाक्षिण्यै
महाकामेशमहिष्यै
महात्रिपुरसुन्दर्यै

ओं चतुःषष्ट्युपचाराढ्यायै
नमः ओं
चतुःशष्टिकलामय्यै
महाचतुःषष्टिकोटि-
योगिनीगणसेवितायै
मनुविद्यायै
चन्द्रविद्यायै
चन्द्रमण्डलमध्यगायै २४०
चारुरूपायै
चारुहासायै
चारुचन्द्रकलाधरायै
चराचरजगन्नाथायै
चक्रराजनिकेतनायै
पार्वत्यै
पद्मनयनायै
पद्मरागसमप्रभायै
पञ्चप्रेतासनासीनायै
पञ्चब्रह्मस्वरूपिण्यै २५०
चिन्मय्यै
परमानन्दायै
विज्ञानघनरूपिण्यै
ध्यानध्यातृध्येयरूपायै
धर्माधर्मविवर्जितायै
विश्वरूपायै
जागरिण्यै
स्वपन्त्यै

ओं तैजसात्मिकायै नमः ओं
सुप्तायै २६०
प्राज्ञात्मिकायै
तुर्यायै
सर्वावस्थाविवर्जितायै
सृष्टिकर्त्र्यै
ब्रह्मरूपायै
गोप्त्र्यै
गोविन्दरूपिण्यै
संहारिण्यै
रुद्ररूपायै
तिरोधानकर्यै २७०
ईश्वर्यै
सदाशिवायै
अनुग्रहदायै
पञ्चकृत्यपरायणायै
भानुमण्डलमध्यस्थायै
भैरव्यै
भगमालिन्यै
पद्मासनायै
भगवत्यै
पद्मनाभसहोदर्यै २८०
उन्मेषनिमिषोत्पन्न-
विपन्नभुवनावल्यै
सहस्रशीर्षवदनायै
सहस्राक्ष्यै

ओं सहस्रपदे नमः ओं
आब्रह्मकीटजनन्यै
वर्णाश्रमविधायिन्यै
निजाज्ञारूपनिगमायै
पुण्यापुण्यफलप्रदायै
श्रुतिसीमन्तसिन्दूरीकृत-
पादाब्जधूलिकायै
सकलागमसंदोहशुक्ति-
संपुटमौक्तिकायै २९०
पुरुषार्थप्रदायै
पूर्णायै
भोगिन्यै
भुवनेश्वर्यै
अम्बिकायै
अनादिनिधनायै
हरिब्रह्मेन्द्रसेवितायै
नारायण्यै
नादरूपायै
नामरूपविवर्जितायै ३००
ह्रींकार्यै
ह्रीमत्यै
हृद्यायै
हेयोपादेयवर्जितायै
राजराजार्चितायै
राज्ञ्यै
रम्यायै

ओं राजीवलोचनायै नमः ओं
रञ्जन्यै
रमण्यै ३१०
रस्यायै
रणत्किङ्किणिमेखलायै
रमायै
राकेन्दुवदनायै
रतिरूपायै
रतिप्रियायै
रक्षाकर्यै
राक्षसघ्न्यै
रामायै
रमणलम्पटायै ३२०
काम्यायै
कामकलारूपायै
कदम्बकुसुमप्रियायै
कल्याण्यै
जगतीकन्दायै
करुणारससागरायै
कलावत्यै
कलालापायै
कान्तायै
कादम्बरीप्रियायै ३३०
वरदायै
वामनयनायै
वारुणीमदविह्वलायै

ओं विश्वाधिकायै नमः ओं
वेदवेद्यायै
विन्ध्याचलनिवासिन्यै
विधात्र्यै
वेदजनन्यै
विष्णुमायायै
विलासिन्यै ३४०
क्षेत्रस्वरूपायै
क्षेत्रेश्यै
क्षेत्रक्षेत्रज्ञपालिन्यै
क्षयवृद्धिविनिर्मुक्तायै
क्षेत्रपालसमर्चितायै
विजयायै
विमलायै
वन्द्यायै
वन्दारुजनवत्सलायै
वाग्वादिन्यै ३५०
वामकेश्यै
वह्निमण्डलवासिन्यै
भक्तिमत्कल्पलतिकायै
पशुपाशविमोचन्यै
संहृताशेषपाषण्डायै
सदाचारप्रवर्तिकायै
तापत्रयाग्निसंतप्तसमा-
ह्लादनचन्द्रिकायै
तरुण्यै

ओं तापसाराध्यायै नमः ओं
तनुमध्यायै ३६०
तमोपहायै
चित्यै
तत्पदलक्ष्यार्थायै
चिदेकरसरूपिण्यै
स्वात्मानन्दलवीभूत-
ब्रह्माद्यानन्दसंतत्यै
परायै
प्रत्यक्चितीरूपायै
पश्यन्त्यै
परदेवतायै
मध्यमायै ३७०
वैखरीरूपायै
भक्तमानसहंसिकायै
कामेश्वरप्राणनाड्यै
कृतज्ञायै
कामपूजितायै
शृङ्गाररससंपूर्णायै
जयायै
जालन्धरस्थितायै
ओड्याणपीठनिलयायै
बिन्दुमण्डलवासिन्यै ३८०
रहोयागक्रमाराध्यायै
रहस्तर्पणतर्पितायै
सद्यःप्रसादिन्यै

ओं विश्वसाक्षिण्यै नमः ओं
साक्षिवर्जितायै
षडङ्गदेवतायुक्तायै
षाड्गुण्यपरिपूरितायै
नित्यक्लिन्नायै
निरुपमायै
निर्वाणसुखदायिन्यै ३९०
नित्याषोडशिकारूपायै
श्रीकण्ठार्धशरीरिण्यै
प्रभावत्यै
प्रभारूपायै
प्रसिद्धायै
परमेश्वर्यै
मूलप्रकृत्यै
अव्यक्तायै
व्यक्ताव्यक्तस्वरूपिण्यै
व्यापिन्यै ४००
विविधाकारायै
विद्याविद्यास्वरूपिण्यै
महाकामेशनयनकुमु-
दाह्लादकौमुद्यै
भक्तहार्दतमोभेदभानु-
मद्भानुसंतत्यै
शिवदूत्यै
शिवाराध्यायै
शिवमूर्त्यै

ओं शिवंकर्यै नमः ओं
शिवप्रियायै
शिवपरायै ४१०
शिष्टेष्टायै
शिष्टपूजितायै
अप्रमेयायै
स्वप्रकाशायै
मनोवाचामगोचरायै
चिच्छक्त्यै
चेतनारूपायै
जडशक्त्यै
जडात्मिकायै
गायत्र्यै ४२०
व्याहृत्यै
संध्यायै
द्विजबृन्दनिषेवितायै
तत्त्वासनायै
तस्मै
तुभ्यं
अय्यै
पञ्चकोशान्तरस्थितायै
निःसीममहिम्ने
नित्ययौवनायै ४३०
मदशालिन्यै
मदघूर्णितरक्ताक्ष्यै
मदपाटलगण्डभुवे

ओं चन्दनद्रवदिग्धाङ्ग्यै नमः ओं
चाम्पेयकुसुमप्रियायै
कुशलायै
कोमलाकारायै
कुरुकुल्लायै
कुलेश्वर्यै
कुलकुण्डालयायै ४४०
कौलमार्गतत्परसेवितायै
कुमारगणनाथाम्बायै
तुष्ट्यै
पुष्ट्यै
मत्यै
धृत्यै
शान्त्यै
स्वस्तिमत्यै
कान्त्यै
नन्दिन्यै ४५०
विघ्ननाशिन्यै
तेजोवत्यै
त्रिनयनायै
लोलाक्षीकामरूपिण्यै
मालिन्यै
हंसिन्यै
मात्रे
मलयाचलवासिन्यै
सुमुख्यै

ओं नलिन्यै नमः ओं ४६०
सुभ्रुवे
शोभनायै
सुरनायिकायै
कालकण्ठ्यै
कान्तिमत्यै
क्षोभिण्यै
सूक्ष्मरूपिण्यै
वज्रेश्वर्यै
वामदेव्यै
वयोवस्थाविवर्जितायै ४७०
सिद्धेश्वर्यै
सिद्धविद्यायै
सिद्धमात्रे
यशस्विन्यै
विशुद्धिचक्रनिलयायै
आरक्तवर्णायै
त्रिलोचनायै
खट्वाङ्गादिप्रहरणायै
वदनैकसमन्वितायै
पायसान्नप्रियायै ४८०
त्वक्स्थायै
पशुलोकभयंकर्यै
अमृतादिमहाशक्ति-
संवृतायै
डाकिनीश्वर्यै

ओं अनाहताब्जनिलयायै
नमः ओं
श्यामाभायै
वदनद्वयायै
दंष्ट्रोज्ज्वलायै
अक्षमालादिधरायै
रुधिरसंस्थितायै ४९०
कालरात्र्यादिशक्त्योघ-
वृतायै
स्निग्धौदनप्रियायै
महावीरेन्द्रवरदायै
राकिण्यम्बास्वरूपिण्यै
मणिपूराब्जनिलयायै
वदनत्रयसंयुतायै
वज्रादिकायुधोपेतायै
डामर्यादिभिरावृतायै
रक्तवर्णायै
मांसनिष्ठायै ५००
गुडान्नप्रीतमानसायै
समस्तभक्तसुखदायै
लाकिन्यम्बास्वरूपिण्यै
स्वाधिष्ठानाम्बुजगतायै
चतुर्वक्त्रमनोहरायै
शूलाद्यायुधसम्पन्नायै
पीतवर्णायै
अतिगर्वितायै

ओं मेदोनिष्ठायै नमः ओं
मधुप्रीतायै ५१०
बन्धिन्यादिसमन्वितायै
दध्यन्नासक्तहृदयायै
काकिनीरूपधारिण्यै
मूलाधाराम्बुजारूढायै
पञ्चवक्त्रायै
अस्थिसंस्थितायै
अङ्कुशादिप्रहरणायै
वरदादिनिषेवितायै
मुद्गौदनासक्तचित्तायै
साकिन्यम्बास्वरूपिण्यै ५२०
आज्ञाचक्राब्जनिलयायै
शुक्लवर्णायै
षडाननायै
मज्जासंस्थायै
हंसवतीमुख्यशक्ति-
समन्वितायै
हरिद्रान्नैकरसिकायै
हाकिनीरूपधारिण्यै
सहस्रदलपद्मस्थायै
सर्ववर्णोपशोभितायै
सर्वायुधधरायै ५३०
शुक्लसंस्थितायै
सर्वतोमुख्यै
सर्वौदनप्रीतचित्तायै

ओं याकिन्यम्बास्वरूपिण्यै
नमः ओं
स्वाहा
स्वधा
अमत्यै
मेधायै
श्रुत्यै
स्मृत्यै ५४०
अनुत्तमायै
पुण्यकीर्त्यै
पुण्यलभ्यायै
पुण्यश्रवणकीर्तनायै
पुलोमजार्चितायै
बन्धमोचन्यै
बर्बरालकायै
विमर्शरूपिण्यै
विद्यायै
वियदादिजगत्प्रसुवे ५५०
सर्वव्याधिप्रशमन्यै
सर्वमृत्युनिवारिण्यै
अग्रगण्यायै
अचिन्त्यरूपायै
कलिकल्मषनाशिन्यै
कात्यायन्यै
कालहन्त्र्यै
कमलाक्षनिषेवितायै

ओं ताम्बूलपूरितमुख्यै नमः ओं
दाडिमीकुसुमप्रभायै ५६०
मृगाक्ष्यै
मोहिन्यै
मुख्यायै
मृडान्यै
मित्ररूपिण्यै
नित्यतृप्तायै
भक्तनिधये
नियन्त्र्यै
निखिलेश्वर्यै
मैत्र्यादिवासनालभ्यायै ५७०
महाप्रलयसाक्षिण्यै
परस्यै शक्त्यै
परायै निष्ठायै
प्रज्ञानघनरूपिण्यै
माध्वीपानालसायै
मत्तायै
मातृकावर्णरूपिण्यै
महाकैलासनिलयायै
मृणालमृदुदोर्लतायै
महनीयायै ५८०
दयामूर्त्यै
महासाम्राज्यशालिन्यै
आत्मविद्यायै
महाविद्यायै

ओं श्रीविद्यायै नमः ओं
कामसेवितायै
श्रीषोडशाक्षरीविद्यायै
त्रिकूटायै
कामकोटिकायै
कटाक्षकिङ्करीभूतकमला-
कोटिसेवितायै ५९०
शिरःस्थितायै
चन्द्रनिभायै
भालस्थायै
इन्द्रधनुःप्रभायै
हृदयस्थायै
रविप्रख्यायै
त्रिकोणान्तरदीपिकायै
दाक्षायण्यै
दैत्यहन्त्र्यै
दक्षयज्ञविनाशिन्यै ६००
दरान्दोलितदीर्घाक्ष्यै
दरहासोज्ज्वलन्मुख्यै
गुरुमूर्तये
गुणनिधये
गोमात्रे
गुहजन्मभुवे
देवेश्यै
दण्डनीतिस्थायै
दहराकाशरूपिण्यै

ओं प्रतिपन्मुख्यराकान्त-
तिथिमण्डलपूजितायै
नमः ओं ६१०
कलात्मिकायै
कलानाथायै
काव्यालापविनोदिन्यै
सचामररमावाणीसव्य-
दक्षिणसेवितायै
आदिशक्त्यै
अमेयायै
आत्मने
परमायै
पावनाकृतये
अनेककोटिब्रह्माण्ड-
जनन्यै ६२०
दिव्यविग्रहायै
क्लींकार्यै
केवलायै
गुह्यायै
कैवल्यपददायिन्यै
त्रिपुरायै
त्रिजगद्वन्द्यायै
त्रिमूर्तये
त्रिदशेश्वर्यै
त्र्यक्षर्यै ६३०
दिव्यगन्धाढ्यायै
ओं सिन्दूरतिलकाञ्चितायै
नमः ओं
उमायै
शैलेन्द्रतनयायै
गौर्यै
गन्धर्वसेवितायै
विश्वगर्भायै
स्वर्णगर्भायै
अवरदायै
वागधीश्वर्यै ६४०
ध्यानगम्यायै
अपरिच्छेद्यायै
ज्ञानदायै
ज्ञानविग्रहायै
सर्ववेदान्तसंवेद्यायै
सत्यानन्दस्वरूपिण्यै
लोपामुद्रार्चितायै
लीलाक्लृप्तब्रह्माण्ड-
मण्डलायै
अदृश्यायै
दृश्यरहितायै ६५०
विज्ञात्र्यै
वेद्यवर्जितायै
योगिन्यै
योगदायै
योग्यायै

ओं योगानन्दायै नमः ओं
युगन्धरायै
इच्छाशक्तिज्ञानशक्ति-
क्रियाशक्तिस्वरूपिण्यै
सर्वाधारायै
सुप्रतिष्ठायै ६६०
सदसद्रूपधारिण्यै
अष्टमूर्त्यै
अजाजेत्र्यै
लोकयात्राविधायिन्यै
एकाकिन्यै
भूमरूपायै
निर्द्वैतायै
द्वैतवर्जितायै
अन्नदायै
वसुदायै ६७०
वृद्धायै
ब्रह्मात्मैक्यस्वरूपिण्यै
बृहत्यै
ब्राह्मण्यै
ब्राह्म्यै
ब्रह्मानन्दायै
बलिप्रियायै
भाषारूपायै
बृहत्सेनायै
भावाभावविवर्जितायै ६८०

ओं सुखाराध्यायै नमः ओं
शुभकर्यै
शोभनायै सुलभायै गत्यै
राजराजेश्वर्यै
राज्यदायिन्यै
राज्यवल्लभायै
राजत्कृपायै
राजपीठनिवेशित-
निजाश्रितायै
राज्यलक्ष्म्यै
कोशनाथायै ६९०
चतुरङ्गबलेश्वर्यै
साम्राज्यदायिन्यै
सत्यसन्धायै
सागरमेखलायै
दीक्षितायै
दैत्यशमन्यै
सर्वलोकवशंकर्यै
सर्वार्थदात्र्यै
सावित्र्यै
सच्चिदानन्दरूपिण्यै ७००
देशकालापरिच्छिन्नायै
सर्वगायै
सर्वमोहिन्यै
सरस्वत्यै
शास्त्रमय्यै

ओं गुहाम्बायै नमः ओं
गुह्यरूपिण्यै
सर्वोपाधिविनिर्मुक्तायै
सदाशिवपतिव्रतायै
संप्रदायेश्वर्यै ७१०
साधुने
यै
गुरुमण्डलरूपिण्यै
कुलोत्तीर्णायै
भगाराध्यायै
मायायै
मधुमत्यै
मह्यै
गणाम्बायै
गुह्यकाराध्यायै ७२०
कोमलाङ्ग्यै
गुरुप्रियायै
स्वतन्त्रायै
सर्वतन्त्रेश्यै
दक्षिणामूर्तिरूपिण्यै
सनकादिसमाराध्यायै
शिवज्ञानप्रदायिन्यै
चित्कलायै
आनन्दकलिकायै
प्रेमरूपायै ७३०
प्रियंकर्यै

ओं नामपारायणप्रीतायै नमः ओं
नन्दिविद्यायै
नटेश्वर्यै
मिथ्याजगदधिष्ठानायै
मुक्तिदायै
मुक्तिरूपिण्यै
लास्यप्रियायै
लयकर्यै
लज्जायै ७४०
रम्भादिवन्दितायै
भवदावसुधावृष्ट्यै
पापारण्यदवानलायै
दौर्भाग्यतूलवातूलायै
जराध्वान्तरविप्रभायै
भाग्याब्धिचन्द्रिकायै
भक्तचित्तकेकिघनाघनायै
रोगपर्वतदम्भोलये
मृत्युदारुकुठारिकायै
महेश्वर्यै ७५०
महाकाल्यै
महाग्रासायै
महाशनायै
अपर्णायै
चण्डिकायै
चण्डमुण्डासुरनिषूदिन्यै
क्षराक्षरात्मिकायै

ओं सर्वलोकेश्यै नमः ओं
विश्वधारिण्यै
त्रिवर्गदात्र्यै ७६०
सुभगायै
त्र्यम्बकायै
त्रिगुणात्मिकायै
स्वर्गापवर्गदायै
शुद्धायै
जपापुष्पनिभाकृतये
ओजोवत्यै
द्युतिधरायै
यज्ञरूपायै
प्रियव्रतायै ७७०
दुराराध्यायै
दुराधर्षायै
पाटलीकुसुमप्रियायै
महत्यै
मेरुनिलयायै
मन्दारकुसुमप्रियायै
वीराराध्यायै
विराड्रूपायै
विरजसे
विश्वतोमुख्यै ७८०
प्रत्यग्रूपायै
पराकाशायै
प्राणदायै

ओं प्राणरूपिण्यै नमः ओं
मार्तण्डभैरवाराध्यायै
मन्त्रिणीन्यस्तराज्यधुरे
त्रिपुरेश्यै
जयत्सेनायै
निस्त्रैगुण्यायै
परापरायै ७९०
सत्यज्ञानानन्दरूपायै
सामरस्यपरायणायै
कपर्दिन्यै
कलामालायै
कामदुहे
कामरूपिण्यै
कलानिधये
काव्यकलायै
रसज्ञायै
रसशेवधये ८००
पुष्टायै
पुरातनायै
पूज्यायै
पुष्करायै
पुष्करेक्षणायै
परस्मै ज्योतिषे
परस्मै धाम्ने
परमाणवे
परात्परायै

ओं पाशहस्तायै नमः ओं ८१०
पाशहन्त्र्यै
परमन्त्रविभेदिन्यै
मूर्तायै
अमूर्तायै
अनित्यतृप्तायै
मुनिमानसहंसिकायै
सत्यव्रतायै
सत्यरूपायै
सर्वान्तर्यामिण्यै
सत्यै ८२०
ब्रह्माण्यै
ब्रह्मणे
जनन्यै
बहुरूपायै
बुधार्चितायै
प्रसवित्र्यै
प्रचण्डायै
आज्ञायै
प्रतिष्ठायै
प्रकटाकृतये ८३०
प्राणेश्वर्यै
प्राणदात्र्यै
पञ्चाशत्पीठरूपिण्यै
विशृङ्खलायै
विविक्तस्थायै

ओं वीरमात्रे नमः ओं
वियत्प्रसुवे
मुकुन्दायै
मुक्तिनिलयायै
मूलविग्रहरूपिण्यै ८४०
भावज्ञायै
भवरोगघ्न्यै
भवचक्रप्रवर्तिन्यै
छन्दःसारायै
शास्त्रसारायै
मन्त्रसारायै
तलोदर्यै
उदारकीर्तये
उद्दामवैभवायै
वर्णरूपिण्यै ८५०
जन्ममृत्युजरातप्तजनवि-
श्रान्तिदायिन्यै
सर्वोपनिषदुद्घुष्टायै
शान्त्यतीतकलात्मिकायै
गम्भीरायै
गगनान्तस्थायै
गर्वितायै
गानलोलुपायै
कल्पनारहितायै
काष्ठायै
अकान्तायै ८६०

ओं कान्तार्धविग्रहायै नमः ओं
कार्यकारणनिर्मुक्तायै
कामकेलितरङ्गितायै
कनत्कनकताटङ्कायै
लीलाविग्रहधारिण्यै
अजायै
क्षयविनिर्मुक्तायै
मुग्धायै
क्षिप्रप्रसादिन्यै
अन्तर्मुखसमाराध्यायै ८७०
बहिर्मुखसुदुर्लभायै
त्रय्यै
त्रिवर्गनिलयायै
त्रिस्थायै
त्रिपुरमालिन्यै
निरामयायै
निरालम्बायै
स्वात्मारामायै
सुधास्रुत्यै
संसारपङ्कनिर्मग्नसमुद्ध-
रणपण्डितायै ८८०
यज्ञप्रियायै
यज्ञकर्त्र्यै
यजमानस्वरूपिण्यै
धर्माधारायै
धनाध्यक्षायै

ओं धनधान्यविवर्धिन्यै नमः ओं
विप्रप्रियायै
विप्ररूपायै
विश्वभ्रमणकारिण्यै
विश्वग्रासायै ८९०
विद्रुमाभायै
वैष्णव्यै
विष्णुरूपिण्यै
अयोन्यै
योनिनिलयायै
कूटस्थायै
कुलरूपिण्यै
वीरगोष्ठीप्रियायै
वीरायै
नैष्कर्म्यायै ९००
नादरूपिण्यै
विज्ञानकलनायै
कल्यायै
विदग्धायै
बैन्दवासनायै
तत्त्वाधिकायै
तत्त्वमय्यै
तत्त्वमर्थस्वरूपिण्यै
सामगानप्रियायै
सोम्यायै ९१०
सदाशिवकुटुम्बिन्यै

ओं सव्यापसव्यमार्गस्थायै नमः ओं
सर्वापद्विनिवारिण्यै
स्वस्थायै
स्वभावमधुरायै
धीरायै
धीरसमर्चितायै
चैतन्यार्घ्यसमाराध्यायै
चैतन्यकुसुमप्रियायै
सदोदितायै ९२०
सदातुष्टायै
तरुणादित्यपाटलायै
दक्षिणादक्षिणाराध्यायै
दरस्मेरमुखाम्बुजायै
कौलिनीकेवलायै
अनर्घ्यकैवल्यपददायिन्यै
स्तोत्रप्रियायै
स्तुतिमत्यै
श्रुतिसंस्तुतवैभवायै
मनस्विन्यै ९३०
मानवत्यै
महेश्यै
मङ्गलाकृतये
विश्वमात्रे
जगद्धात्र्यै
विशालाक्ष्यै

ओं विरागिण्यै नमः ओं
प्रगल्भायै
परमोदारायै
परामोदायै ९४०
मनोमय्यै
व्योमकेश्यै
विमानस्थायै
वज्रिण्यै
वामकेश्वर्यै
पञ्चयज्ञप्रियायै
पञ्चप्रेतमञ्चाधिशायिन्यै
पञ्चम्यै
पञ्चभूतेश्यै
पञ्चसंख्योपचारिण्यै ९५०
शाश्वत्यै
शाश्वतैश्वर्यायै
शर्मदायै
शम्भुमोहिन्यै
धरायै
धरसुतायै
धन्यायै
धर्मिण्यै
धर्मवर्धिन्यै
लोकातीतायै
गुणातीतायै
सर्वातीतायै

ओं शमात्मिकायै नमः ओं
बन्धूककुसुमप्रख्यायै
बालायै
लीलाविनोदिन्यै
सुमङ्गल्यै
सुखकर्यै
सुवेषाढ्यायै
सुवासिन्यै ९७०
सुवासिन्यर्चनप्रीतायै
आशोभनायै
शुद्धमानसायै
बिन्दुतर्पणसंतुष्टायै
पूर्वजायै
त्रिपुराम्बिकायै
दशमुद्रासमाराध्यायै
त्रिपुराश्रीवशंकर्यै
ज्ञानमुद्रायै
ज्ञानगम्यायै ९८०
ज्ञानज्ञेयस्वरूपिण्यै

ओं योनिमुद्रायै नमः ओं
त्रिखण्डेश्यै
त्रिगुणायै
अम्बायै
त्रिकोणगायै
अनघायै
अद्भुतचारित्रायै
वाञ्छितार्थप्रदायिन्यै
अभ्यासातिशयज्ञातायै ९९०
षडध्वातीतरूपिण्यै
अव्याजकरुणामूर्तये
अज्ञानध्वान्तदीपिकायै
आबालगोपविदितायै
सर्वानुल्लङ्घ्यशासनायै
श्रीचक्रराजनिलयायै
श्रीमत्त्रिपुरसुन्दर्यै
श्रीशिवायै
शिवशक्त्यैक्यरूपिण्यै
ललिताम्बिकायै १०००

॥ श्रीललितासहस्रनामावलिः संपूर्णा ॥

# ॥ आश्चर्याष्टोत्तरशतनामावलिः ॥

ओं - ऐं - ह्रीं - श्रीं

ओं परमानन्दलहर्यै नमः ओं
परचैतन्यदीपिकायै
स्वयंप्रकाशकिरणायै
नित्यवैभवशालिन्यै
विशुद्धकेवलाखण्डसत्यकालात्मरूपिण्यै
आदिमध्यान्तरहितायै
महामायाविलासिन्यै
गुणत्रयपरिच्छेत्र्यै
सर्वतत्त्वप्रकाशिन्यै
स्त्रीपुंसभावरसिकायै १०
जगत्सर्गादिलम्पटायै
अशेषनामरूपादिभेदच्छेदरविप्रभायै
अनादिवासनारूपायै
वासनोद्यत्प्रपञ्चिकायै
प्रपञ्चोपशमप्रौढायै
चराचरजगन्मय्यै
समस्तजगदाधारायै
सर्वसंजीवनोत्सुकायै
भक्तचेतोमयानन्तस्वार्थवैभवविभ्रमायै
सर्वाकर्षणवश्यादिसर्वकर्मधुरंधरायै २०
विज्ञानपरमानन्दविद्यायै
संतानसिद्धिदायै
आयुरारोग्यसौभाग्यबलश्रीकीर्तिभाग्यदायै

ओं धनधान्यमणीवस्त्रभूषालेपनमाल्यदायै नमः ओं
गृहग्राममहाराज्यसाम्राज्यसुखदायिन्यै
सप्ताङ्गशक्तिसंपूर्णसार्वभौमफलप्रदायै
ब्रह्मविष्णुशिवेन्द्रादिपदविश्राणनक्षमायै
भुक्तिमुक्तिमहाभक्तिविरक्त्यद्वैतदायिन्यै
निग्रहानुग्रहाध्यक्षायै
ज्ञाननिर्द्वैतदायिन्यै ३०
परकायप्रवेशादियोगसिद्धिप्रदायिन्यै
शिष्टसंजीवनप्रौढायै
दुष्टसंहारसिद्धिदायै
लीलाविनिर्मितानेककोटिब्रह्माण्डमण्डलायै
एकस्यै
अनेकात्मिकायै
नानारूपिण्यै
अर्धाङ्गनेश्वर्यै
शिवशक्तिमय्यै
नित्यशृङ्गारैकरसप्रियायै ४०
तुष्टायै
पुष्टायै
अपरिच्छिन्नायै
नित्ययौवनमोहिन्यै
समस्तदेवतारूपायै
सर्वदेवाधिदेवतायै
देवर्षिपितृसिद्धादियोगिनीभैरवात्मिकायै
निधिसिद्धिमणीमुद्रायै
शस्त्रास्त्रायुधभासुरायै

ओं छत्रचामरवादित्रपताकाव्यजनाञ्चितायै नमः ओं ५०
हस्त्यश्वरथपादातामात्यसेनासुसेवितायै
पुरोहितकुलाचार्यगुरुशिष्यादिसेवितायै
सुधासमुद्रमध्योद्यत्सुरद्रुमनिवासिन्यै
मणिद्वीपान्तरप्रोद्यत्कदम्बवनवासिन्यै
चिन्तामणिगृहान्तस्थायै
मणिमण्टपमध्यगायै
रत्नसिंहासनप्रोद्यच्छिवमञ्चाधिशायिन्यै
सदाशिवमहालिङ्गमूलसंघट्टयोनिकायै
अन्योन्यालिङ्गसंघर्षकण्डूसंक्षुब्धमानसायै
कळोद्यद्बिन्दुकाळिन्यातुर्यनादपरम्परायै ६०
नादान्तानन्दसंदोहस्वयंव्यक्तवचोऽमृतायै
कामराजमहातन्त्ररहस्याचारदक्षिणायै
मकारपञ्चकोद्भूतप्रौढान्तोल्लाससुन्दर्यै
श्रीचक्रराजनिलयायै
श्रीविद्यामन्त्रविग्रहायै
अखण्डसच्चिदानन्दशिवशक्त्यैक्यरूपिण्यै
त्रिपुरायै
त्रिपुरेशान्यै
महात्रिपुरसुन्दर्यै
त्रिपुरावासरसिकायै ७०
त्रिपुराश्रीस्वरूपिण्यै
महापद्मवनान्तस्थायै
श्रीमत्त्रिपुरमालिन्यै
महात्रिपुरसिद्धाम्बायै
श्रीमहात्रिपुराम्बिकायै

ओं नवचक्रक्रमादेव्यै नमः ओं
महात्रिपुरभैरव्यै
श्रीमात्रे
ललितायै
बालायै ८०
राजराजेश्वर्यै
शिवायै
उत्पत्तिस्थितिसंहारक्रमचक्रनिवासिन्यै
अर्धमेर्वात्मचक्रस्थायै
सर्वलोकमहेश्वर्यै
वल्मीकपुरमध्यस्थायै
जम्बूवननिवासिन्यै
अरुणाचलशृङ्गस्थायै
व्याघ्रालयनिवासिन्यै
श्रीकाळहस्तिनिलयायै ९
काशीपुरनिवासिन्यै
श्रीमत्कैलासनिलयायै
द्वादशान्तमहेश्वर्यै
श्रीषोडशान्तमध्यस्थायै
सर्ववेदान्तलक्षितायै
श्रुतिस्मृतिपुराणेतिहासागमकलेश्वर्यै
भूतभौतिकतन्मात्रदेवताप्राणहृन्मय्यै
जीवेश्वरब्रह्मरूपायै
श्रीगुणाढ्यायै
गुणात्मिकायै १००
अवस्थात्रयनिर्मुक्तायै

ओं वाग्रमोमामहीमय्यै नमः ओं
गायत्रीभुवनेशानीदुर्गाकाळ्यादिरूपिण्यै
मत्स्यकूर्मवराहादिनानारूपविलासिन्यै
महायोगीश्वराराध्यायै
महावीरवरप्रदायै
सिद्धेश्वरकुलाराध्यायै
श्रीमच्चरणवैभवायै १०८

॥ इति श्रीदेवीवैभवाश्चर्याष्टोत्तरशतनामावलिः ॥

# ॥ श्रीललितात्रिशतीनामावलिः ॥

अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम् ।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥

ओं - ऐं - ह्रीं - श्रीं

४ ककाररूपायै नमः ओं
कल्याण्यै
कल्याणगुणशालिन्यै
कल्याणशैलनिलयायै
कमनीयायै
कलावत्यै
कमलाक्ष्यै
कल्मषघ्न्यै
करुणामृतसागरायै
कदम्बकाननावासायै १०
कदम्बकुसुमप्रियायै
कन्दर्पविद्यायै
कन्दर्पजनकापाङ्गवीक्षणायै
कर्पूरवीटीसौरभ्यकल्लो-
लितककुप्तटायै
कलिदोषहरायै
कञ्जलोचनायै
कम्रविग्रहायै
कर्मादिसाक्षिण्यै
कारयित्र्यै
कर्मफलप्रदायै २०

४ एकाररूपायै नमः ओं
एकाक्षर्यै
एकानेकाक्षराकृत्यै
एतत्तदित्यनिर्देश्यायै
एकानन्दचिदाकृत्यै
एवमित्यागमाबोध्यायै
एकभक्तिमदर्चितायै
एकाग्रचित्तनिर्ध्यातायै
एषणारहितादृतायै
एलासुगन्धिचिकुरायै ३०
एनःकूटविनाशिन्यै
एकभोगायै
एकरसायै
एकैश्वर्यप्रदायिन्यै
एकातपत्रसाम्राज्यप्रदायै
एकान्तपूजितायै
एधमानप्रभायै
एजदनेकजगदीश्वर्यै
एकवीरादिसंसेव्यायै
एकप्राभवशालिन्यै ४०
ईकाररूपायै

४ ईशित्र्यै नमः ओं
ईप्सितार्थप्रदायिन्यै
ईदृगित्यविनिर्देश्यायै
ईश्वरत्वविधायिन्यै
ईशानादिब्रह्ममय्यै
ईशत्वाद्यष्टसिद्धिदायै
ईक्षित्र्यै
ईक्षणसृष्टाण्डकोट्यै
ईश्वरवल्लभायै ५०
ईडितायै
ईश्वरार्धाङ्गशरीरायै
ईशाधिदेवतायै
ईश्वरप्रेरणकर्यै
ईशताण्डवसाक्षिण्यै
ईश्वरोत्सङ्गनिलयायै
ईतिबाधाविनाशिन्यै
ईहाविरहितायै
ईशशक्त्यै
ईषत्स्मिताननायै ६०
लकाररूपायै
ललितायै
लक्ष्मीवाणीनिषेवितायै
लाकिन्यै
ललनारूपायै
लसद्दाडिमपाटलायै
ललन्तिकालसत्फालायै

४ ललाटनयनार्चितायै नमः ओं
लक्षणोज्ज्वलदिव्याङ्ग्यै
लक्षकोट्यण्डनायिकायै ७०
लक्ष्यार्थायै
लक्षणागम्यायै
लब्धकामायै
लतातनवे
ललामराजदलिकायै
लम्बिमुक्तालताञ्चितायै
लम्बोदरप्रसुवे
लभ्यायै
लज्जाढ्यायै
लयवर्जितायै ८०
ह्रींकाररूपायै
ह्रींकारनिलयायै
ह्रींपदप्रियायै
ह्रींकारबीजायै
ह्रींकारमन्त्रायै
ह्रींकारलक्षणायै
ह्रींकारजपसुप्रीतायै
ह्रींमत्यै
ह्रींविभूषणायै
ह्रींशीलायै ९०
ह्रींपदाराध्यायै
ह्रींगर्भायै
ह्रींपदाभिधायै

४ ह्रींकारवाच्यायै नमः ओं
ह्रींकारपूज्यायै
ह्रींकारपीठिकायै
ह्रींकारवेद्यायै
ह्रींकारचिन्त्यायै
ह्रीं
ह्रींशरीरिण्यै १००
हकाररूपायै
हलधृत्पूजितायै
हरिणेक्षणायै
हरप्रियायै
हराराध्यायै
हरिब्रह्मेन्द्रवन्दितायै
हयारूढासेवितांघ्र्यै
हयमेधसमर्चितायै
हर्यक्षवाहनायै
हंसवाहनायै ११०
हतदानवायै
हत्यादिपापशमन्यै
हरिदश्वादिसेवितायै
हस्तिकुम्भोत्तुङ्गकुचायै
हस्तिकृत्तिप्रियाङ्गनायै
हरिद्राकुङ्कुमादिग्धायै
हर्यश्वाद्यमरार्चितायै
हरिकेशसख्यै
हादिविद्यायै

४ हालामदालसायै
नमः ओं १२०
सकाररूपायै
सर्वज्ञायै
सर्वेश्यै
सर्वमङ्गळायै
सर्वकर्त्र्यै
सर्वभर्त्र्यै
सर्वहर्त्र्यै
सनातन्यै
सर्वानवद्यायै
सर्वाङ्गसुन्दर्यै १३०
सर्वसाक्षिण्यै
सर्वात्मिकायै
सर्वसौख्यदात्र्यै
सर्वविमोहिन्यै
सर्वाधारायै
सर्वगतायै
सर्वावगुणवर्जितायै
सर्वारुणायै
सर्वमात्रे
सर्वभूषणभूषितायै १४०
ककारार्थायै
कालहन्त्र्यै
कामेश्यै
कामितार्थदायै

४ कामसंजीविन्यै नमः ओं
कल्यायै
कठिनस्तनमण्डलायै
करभोरवे
कलानाथमुख्यै
कचजिताम्बुदायै १५०
कटाक्षस्यन्दिकरुणायै
कपालिप्राणनायिकायै
कारुण्यविग्रहायै
कान्तायै
कान्तिधूतजपावल्यै
कलालापायै
कम्बुकण्ठ्यै
करनिर्जितपल्लवायै
कल्पवल्लीसमभुजायै
कस्तूरीतिलकाञ्चितायै १६०
हकारार्थायै
हंसगत्यै
हाटकाभरणोज्ज्वलायै
हारहारिकुचाभोगायै
हाकिन्यै
हल्यवर्जितायै
हरित्पतिसमाराध्यायै
हठात्कारहतासुरायै
हर्षप्रदायै
हविर्भोक्त्र्यै १७०
हार्दसंतमसापहायै

४ हल्लीसलास्यसंतुष्टायै नमः ओं
हंसमन्त्रार्थरूपिण्यै
हानोपादाननिर्मुक्तायै
हर्षिण्यै
हरिसोदर्यै
हाहाहूहूमुखस्तुत्यायै
हानिवृद्धिविवर्जितायै
हय्यंगवीनहृदयायै
हरिगोपारुणांशुकायै १८०
लकाराख्यायै
लतापूज्यायै
लयस्थित्युद्भवेश्वर्यै
लास्यदर्शनसंतुष्टायै
लाभालाभविवर्जितायै
लङ्घ्येतराज्ञायै
लावण्यशालिन्यै
लघुसिद्धिदायै
लाक्षारससवर्णाभायै
लक्ष्मणाग्रजपूजितायै १९०
लभ्येतरायै
लब्धभक्तिसुलभायै
लाङ्गलायुधायै
लग्नचामरहस्तश्रीशार-
दापरिवीजितायै
लज्जापदसमाराध्यायै
लम्पटायै
लकुलेश्वर्यै

४ लब्धमानायै नमः ओं
लब्धरसायै
लब्धसंपत्समुन्नत्यै २००
ह्रींकारिण्यै
ह्रींकाराद्यायै
ह्रींमध्यायै
ह्रींशिखामणये
ह्रींकारकुण्डाग्निशिखायै
ह्रींकारशशिचन्द्रिकायै
ह्रींकारभास्कररुच्यै
ह्रींकाराम्भोदचञ्चलायै
ह्रींकारकन्दाङ्कुरिकायै
ह्रींकारैकपरायणायै २१०
ह्रींकारदीर्घिकाहंस्यै
ह्रींकारोद्यानकेकिन्यै
ह्रींकारारण्यहरिण्यै
ह्रींकारावालवल्ल्यै
ह्रींकारपञ्जरशुक्यै
ह्रींकाराङ्गणदीपिकायै
ह्रींकारकन्दरासिंह्यै
ह्रींकारम्भोजभृङ्गिकायै
ह्रींकारसुमनोमाध्व्यै
ह्रींकारतरुमञ्जर्यै २२०
सकाराख्यायै
समरसायै
सकलागमसंस्तुतायै
सर्ववेदान्ततात्पर्यभूम्यै

४ सदसदाश्रयायै नमः ओं
सकलायै
सच्चिदानन्दायै
साध्यायै
सद्गतिदायिन्यै
सनकादिमुनिध्येयायै २३०
सदाशिवकुटुम्बिन्यै
सकलाधिष्ठानरूपायै
सत्यरूपायै
समाकृत्यै
सर्वप्रपञ्चनिर्मात्र्यै
समानाधिकवर्जितायै
सर्वोत्तुङ्गायै
सङ्गहीनायै
सगुणायै
सकलेष्टदायै २४०
ककारिण्यै
काव्यलोलायै
कामेश्वरमनोहरायै
कामेश्वरप्राणनाड्यै
कामेशोत्सङ्गवासिन्यै
कामेश्वरालिङ्गिताङ्ग्यै
कामेश्वरसुखप्रदायै
कामेश्वरप्रणयिन्यै
कामेश्वरविलासिन्यै
कामेश्वरतपःसिद्ध्यै २५०
कामेश्वरमनःप्रियायै

४ कामेश्वरप्राणनाथायै नमः ओं
कामेश्वरविमोहिन्यै
कामेश्वरब्रह्मविद्यायै
कामेश्वरगृहेश्वर्यै
कामेश्वराह्लादकर्यै
कामेश्वरमहेश्वर्यै
कामेश्वर्यै
कामकोटिनिलयायै
काङ्क्षितार्थदायै २६०
लकारिण्यै
लब्धरूपायै
लब्धधियै
लब्धवाञ्छितायै
लब्धपापमनोदूरायै
लब्धाहंकारदुर्गमायै
लब्धशक्त्यै
लब्धदेहायै
लब्धैश्वर्यसमुन्नत्यै
लब्धवृद्ध्यै २७०
लब्धलीलायै
लब्धयौवनशालिन्यै
लब्धातिशयसर्वाङ्गसौन्दर्यायै
लब्धविभ्रमायै
लब्धरागायै
लब्धपत्यै
लब्धनानागमस्थित्यै

४ लब्धभोगायै नमः ओं
लब्धसुखायै
लब्धहर्षाभिपूरितायै २८०
ह्रींकारमूर्त्यै
ह्रींकारसौधशृङ्गकपोतिकायै
ह्रींकारदुग्धाब्धिसुधायै
ह्रींकारकमलेन्दिरायै
ह्रींकारमणिदीपार्चिषे
ह्रींकारतरुशारिकायै
ह्रींकारपेटकमणये
ह्रींकारादर्शबिम्बितायै
ह्रींकारकोशासिलतायै
ह्रींकारास्थाननर्तक्यै २९०
ह्रींकारशुक्तिकामुक्तामणये
ह्रींकारबोधितायै
ह्रींकारमयसौवर्णस्तम्भ-
विद्रुमपुत्रिकायै
ह्रींकारवेदोपनिषदे
ह्रींकाराध्वरदक्षिणायै
ह्रींकारनन्दनारामनव-
कल्पकवल्ल्यै
ह्रींकारहिमवद्गङ्गायै
ह्रींकारार्णवकौस्तुभायै
ह्रींकारमन्त्रसर्वस्वायै
ह्रींकारपरसौख्यदायै ३००

४ श्रीमद्राजराजेश्वर्यै नमः ओं ॥

॥ श्रीललितात्रिशतीनामावलिः संपूर्णा ॥

COPIES AVAILABLE AT:

---

1. Srividyopasana Sthanikam
   **C.V. Kamakoti Sastry**
   Hereditary Mirasdar
   Sri Kanchee Kamakoti Peetham
   Sri Kamakshi Ambal Devasthanam
   Kancheepuram-631502, Tamil Nadu

2. **Omkarananda Ashram Himalayas**
   Swami Omkarananda Saraswati Charitable Trust
   Swami Omkarananda Saraswati Marg
   Muni-ki-reti, P.O. Shivanandanagar-249192
   Dist. Tehri Garhwal, Uttaranchal, INDIA